कमाल का मज़ा...गोल्ड स्पॉट का मज़ा




Artificially flavoured. Contains no fruit juice or fruit pulp.

serve chilled



# मार्गभेदः

**तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा ।**
**भगवच्छरणत्वं स्यात् साधनाभ्यासपाकतः ॥**

भगवान् तु एकः । सर्वेषां मतानां पर्यवसानं तस्मिन् परतत्त्वे एव । उद्दिष्टे फले अभिन्ने अपि, मार्गभेदात् विभिन्नानि मतानि । मार्गभेदस्य कारणं तु भक्तजनानां साधनाभ्यासादिषु स्थितः परिपाकभेदः ।

समुद्रे वाप्यां नद्यां तटाके च जलं तिष्ठति । तथापि एतेषां मध्ये साक्षात् सम्बन्धः कोऽपि नास्ति । नदी भिन्ना, समुद्रः भिन्नः । एतत् द्वैतम् ।

प्रवहत् नदीजलं समुद्रप्राप्तिपर्यन्तं समुद्रजलतः भिन्नम् । किन्तु यदा नदी-सागरयोः सङ्गमः तदा समुद्रस्य, नदी एकशेषः भवति । एतत् विशिष्टाद्वैतम् ।

वापीकूपनदीसमुद्रेषु यत् जलम् अस्ति तत् मेघतः आगतम् । मेघः तु समुद्रजलेन उद्भूतः । समुद्रः→सूर्यशाखः→मेघः→वृष्टिः→नदी (कूपादयः च) →पुनः समुद्रः—एवं चक्राकारेण परिवर्तनम् । एतत् अद्वैतम् ।

नित्यजीवने अपि एवम् एव । 'अहं भगवतः अधीनः । मदीयं किमपि नास्ति । अहं भगवत्सेवकः' इत्येतत् द्वैतचिन्तनम् । 'शिशोः माता इव भगवान् मदीयः । अहम् अस्मि, भगवान् अपि अस्ति, भगवति अहं विलीनः' इति सन्तृप्तिः विशिष्टाद्वैतम् । 'सः एव अहम्, अहम् एव सः, द्वितीयम् इति नास्ति' इत्येतत् अद्वैतचिन्तनम् ।

सत्कुटुम्बं पश्यन्तु—पाकादिकार्येषु द्रव्यसम्पादनादिषु च द्वैतमर्यादा । देवपूजादिधार्मिककार्येषु विवाहाद्युत्सवेषु च पतिपत्न्योः अंशांशिभावः—विशिष्टाद्वैत-मर्यादा । प्रियदाम्पत्ये अत्यन्तासक्तादशायां न भेदस्मरणम्- अद्वैतमर्यादा ।

एतम् एव भावं मनसि कृत्वा कश्चित् कविः वदति—

अहं देहबुद्ध्या तवैवास्मि दासः । अहं जीवबुद्ध्या तवैवैकदेशः ।
त्वमेवास्म्यहं त्वात्मबुद्ध्या तथापि । प्रसीदान्वहं देवबुद्ध्या नमस्ते ॥

('जीवनधर्मयोग' पुस्तकतः)




# सम्बोधनं कथम् ?

शिष्यः - आचार्य ! अभिवादये !

अचार्यः - आगच्छतु वत्स ! उपविशतु ।

शि- श्रीमन्, अद्य 'रवि' इति सम्बोधनं श्रुतवान् ।

आ- असाधुरूपं तत् । 'रवे' 'हरे' इति एकारान्तत्वेन सम्बोधनम् उचितम् । आकारान्तस्त्रीलिङ्गशब्दानाम् अपि सम्बोधनम् एकारान्तत्वेन एव । यथा- 'मङ्गले' 'विमले' 'चन्द्रिके' इति ।

शि- ईकारान्तशब्दानां सम्बोधने ह्रस्वत्वं खलु ?

आ- आम्, 'मालति' 'भगिनि' 'भारति' इत्यादिरूपेण ।

शि- 'शास्त्री' इति सम्बोधनम् उचितं न किल ?

आ- आम्, एतादृशाः इन्नन्ताः इति उच्यन्ते । (यतः अन्ते इन् अस्ति) सम्बोधने तु 'न्' श्रूयते । यथा - शास्त्रिन्, अग्निहोत्रिन् इत्यादि । एवम् एव वर्मन्, शर्मन् इत्यत्रापि 'न्' श्रूयते ।

शि- मातरं पितरं च कथं सम्बोधयेयम् ?

आ- मातः अम्ब इति वा, पितः जनक इति वा सम्बोधयतु ।

शि- मातुः विषये भवदुक्तम् उचितम् । किन्तु पितुः सम्बोधने व्यावहारिक-दृष्ट्या कृतकता अनुभूयते किल ? ययोः आत्मीयता, तयोः सम्बोधनं कृतकं न भवेत् ।

आ- तत् तु सत्यम् एव । एवं तर्हि पितरं 'तात' इति सम्बोधयतु । पिता अपि पुत्रं 'तात' इत्येव सम्बोधयितुम् अर्हति । पुत्र/वत्स इत्यपि । पुत्रीं च वत्से/पुत्रि इति ।

शि- अध्यापकम् अध्यापिकां च किमिति . . . ?

आ- श्रीमन्/आर्य/आचार्य इति अध्यापकं, मान्ये/आर्ये इति च अध्यापिकां सम्बोधयतु ।



शि- अपरिचितानां सम्बोधनं कथम् ?

आ- श्रीमन्/महोदय इत्यादिरूपेण पुरुषस्य, स्त्रियः तु मान्ये /आर्ये इति वा, ज्येष्ठायाः मातः इति, कनिष्ठायाः भगिनि इति वा सम्बोधनम् ।

शि- पतिः पत्नीं पत्नी, पतिं च किमिति सम्बोधयेत् ?

आ- पतिः पत्नीं नाम्ना वा (यथा- सीते, गीते, मालति,) 'भवति' इति वा (भवच्छब्दस्य सम्बोधनं) सम्बोधयतु । पत्युः 'भोः' इति पर्याप्तम् । नाटकेषु 'आर्यपुत्र' इत्यपि सम्बोधनम् श्रूयते ।

शि- मातुलपितृव्यादीनां सम्बोधनम् ?

आ- मातुल, पितृव्य, आवुत्त, पितामह इत्यादिरूपेण एव ।

शि- आवुत्त, प्रजावति ! (भ्रातृजाये इति वा) इत्यादिषु कृतकता स्फुटतया प्रतीयते किल ? एवं चेत् श्वशुरं श्वश्रूं च किमिति सम्बोधयेत् स्नुषा ?

आ- प्रायः श्वशुर श्वश्रु इत्येव सम्बोधनीयम् । कृतकृता भासते इति तु सत्यम् । आत्मना स्वयं न अभ्यस्तम् इति कारणतः एवं भासते प्रायः । निरन्तरेण अभ्यासेन कृतकता अपगच्छेत् ।

शि- केचन ज्येष्ठान् सर्वदा बहुवचनेन सम्बोधयन्ति किल ? तथैव पत्नीं पतिं एकवचने यदि सम्बोधयेत् तर्हि . . . ।

आ- पत्नी पतिम् एकवचने सम्बोधयति चेत् कः दोषः ? प्राचीनव्यहारः तथा आसीत् एव । वस्तुतः यत्र बहुत्वं तत्रैव बहुवचनम् । गुरूणां स्वामिपादानां च विषये कुत्रचित् बहुवचनम् अनुमतं, तावदेव । इतरत्र एकवचनम् एव शोभते । अतः भवान् मां एकवचनेन यत् सम्बोधयति तत् उचितम् एव ।

शि- शिष्यं माम् उद्दिश्य भवच्छब्दप्रयोगः उचितः वा ?

आ- अत्र एकैकेन अपि आत्मा प्रष्टव्यः । यदि हृदयम् अङ्गीकरोति तर्हि तथा व्यवहारे कः दोषः ? सौलभ्यदृष्ट्या किल एवं व्यवहारः ? अन्यच्च नाटकादिषु पत्नीं चेटीं च भवच्छब्देन सम्बोधयन्ति तत्र तत्र । ये भवच्छब्दप्रयोगं न इच्छन्ति ते युष्मच्छब्देन व्यवहरन्तु नाम ।

—✳✳—



# चन्दमामा

डिसेम्बर – १९८५

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-५०

वार्षिकं ग्राहकशुल्कम् रू. ३०-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

प्रतिवर्षं प्रतिराज्यं सहस्रशः बालाः संस्कृतं पठन्ति । तथापि तदनुगुणं संस्कृतज्ञानां सङ्ख्यायां वृद्धिः न दृश्यते, किमर्थम् ?

संस्कृतविद्यार्थिनः चिन्तयन्ति- गणितेतिहासादयः इव संस्कृतम् अपि कश्चन अध्ययनविषयः, तावदेव इति । अतः एव अध्ययनं समाप्तं चेत् संस्कृतसम्बन्धः अपि विघटितः भवति ।

न हि अत्र छात्राणां कोऽपि दोषः । समीपम् आगतानां रक्षणे अस्माकं कः प्रयत्नः अस्ति ? कः उपायः चिन्तितः ? इतर-भाषासु तु पत्रिकाः साहित्यं इत्यादयः उपकुर्वन्ति । संस्कृते तु पत्रिकाः न आकर्षिकाः । अतः छात्राणाम् आसक्तेः वर्धने ताः असफलाः । सुलभलभ्यं साहित्यं नास्तीति न पुनर्वक्तव्यम् ।

तर्हि समीपम् आगतानां रक्षणं कथम् ? एकः एव उपायः- प्रीतेः जागरणम् । व्यावहारिकलाभादिकम् अचिन्तयन्तः ते श्रद्धावन्तः यथा भवेयुः तथा विशेषप्रयत्नः करणीयः। विविधाः मार्गाः त्वरया चिन्तनीयाः । कर्णाटके इतरत्र च दशदिनात्मकं सम्भाषणशिबिरम् एतत्कार्यं समर्थतया कुर्वत् अस्ति ।

सम्पुटः-२ डिसेम्बर-८५ सञ्चिका-९

प्रतिकृतिमूल्यम्- रू.२-५० वार्षिकं ग्राहकशुल्कम्- रू.३०/-



रसप्रश्नाः –

# गणे अनर्हः शब्दः कः ?

[ अधोलिखितेषु प्रश्नेषु एकैकस्मिन् अपि त्रयाणां गणः कश्चन अस्ति । तन्मध्ये गणे प्रवेष्टुम् अनर्हः चतुर्थः शब्दः प्रविष्टः । प्रतिप्रश्नं तादृशः शब्दः कः इति विचार्य पृथक्कुर्वन्तु ]

१. ब्रह्मा इन्द्रः महेश्वरः विष्णुः ।

२. गार्गी लोपामुद्रा द्रौपदी अरुन्धती ।

३. पुस्तकं दर्वी स्थालिका चषकः ।

४. भास्कराचार्यः वराहमिहिरः आर्यभटः चरकः ।

५. पाणिनिः व्यासः पतञ्जलिः वररुचिः ।

६. वासवदत्ता कादम्बरी हर्षचरितं नैषधीयचरितम् ।

७. अभिज्ञानशाकुन्तलम् विक्रमोर्वशीयम् मालविकाग्निमित्रम् मालतीमाधवम् ।

८. शाकटायनः शाकल्यः वाल्मीकिः भागुरिः ।

९. भवति एधते कुप्यति वन्दते ।

१०. धनुः गुरुः भानुः विष्णुः ।

११. वृक्षाः चन्द्रमाः लताः नद्यः ।

१२. मेदिनी हलायुधः शब्दार्थकल्पद्रुमः भृगुसंहिता ।

१३. इतः ततः मातः कुतः ।

उत्तराणि–

१. इन्द्रः त्रिमूर्तिषु न प्रविष्टः । २. द्रौपदी न ऋषिपत्नी । ३. पुस्तकं भोजनोपयोगी पदार्थः न । ४. चरकः गणितज्ञेभ्यः भिन्नः । ५. व्यासः न वैयाकरणत्वेन प्रसिद्धः । ६. नैषधीयचरितं न गद्यम् । ७. मालतीमाधवं न कालिदासस्य । ८. वाल्मीकिः पाणिनिपूर्वकालीन-वैयाकरणेभ्यः भिन्नः । ९. कुप्यति इति धातुरूपं प्रथमगणे न प्रविष्टम् । १०. धनुः– न उकारान्तः शब्दः । ११. 'चन्द्रमाः' इति बहुवचनान्तं रूपं न । १२. भृगुसंहिता न शब्दकोषः । १३. 'मातः' इत्येतत् अव्ययरूपं न ।

## रसवार्ताः



### व्याघ्रराजाय राजसौलभ्यम्

अस्मिन् वर्षे समग्रं देहलीनगरं तापाधिक्येन तप्तम्। किन्तु तत्रत्यः प्राणिसङ्ग्रहालयः यथापूर्वम् आसीत्। यतः तत्रत्याः व्यवस्थापकाः वितानर्निर्माणेन प्राणिनः पक्षिणः च तापतः रक्षितवन्तः। व्याघ्राय व्यजनसेवा व्यवस्थापिता। श्वेत-व्याघ्रेभ्यः तु वातानुकूलप्रकोष्ठस्य व्यवस्था आसीत्।

### बधिराणां दूरवाणी



ब्रिटन्देशे एन्सेक्स विश्वविद्यालये बधिराणाम् उपयोगार्थं 'विजुवल टेलिफोन्' निर्मितम् अस्ति। टेलिफोन् तन्त्रीषु पुत्तलिकानां साहाय्येन संज्ञानां प्रसारः यथा शक्येत तादृश-साङ्केतिकविधानेन एषा दूरवाणी निर्मिता अस्ति।



### ऐतिहासिकः पूर्वयुगपरिसरः

प्यारिस्नगरतः २०० कि. मि. दूरे मोर्वान् प्रान्ते एकं पूर्वयुगीयम् उद्यानं निर्मितम् अस्ति। पूर्वकाले स्थितानां डिनोजार्स प्रभृतीनां प्राणिनां शिल्पं 'कार्डोलिगिटान्' नामकः कलाकारः निर्मितवान् अस्ति। सजीवाः इव दृश्यमानानाम् एतेषां शिल्पानां समीपम् आगन्तुं तत्परिसरे स्थिताः प्राणिनः बिभ्यति इति श्रूयते।

## भवन्तः जानन्ति वा?

१. भीमानद्याः प्रधाना उपनदी का?
२. चेम्बल्नदी कस्याः महानद्याः उपनदी?
३. अरेबियासमुद्रं प्रविशन्तीषु महानदी नर्मदा। एवं तर्हि द्वितीयस्थानीया नदी का?
४. बिहारप्रान्ते कां नदीं 'विषादनदी' इति आह्वयन्ति?
५. 'गान्धी सागर डाम्' कस्याः नद्याः तीरे निर्मितम् अस्ति?

(उत्तराणि ६५तमे पृष्ठे)

# अम्बरीषः

महाराजः अम्बरीषः श्रेष्ठः विष्णुभक्तः। अम्बरीषस्य भक्त्या तुष्टः विष्णुः तदीयरक्षणार्थं सुदर्शनचक्रं वररूपेण दत्तवान् आसीत्।

कदाचित् अम्बरीषः आवर्षं व्रतम् आचरितवान्। व्रतस्य अन्तिमदिनत्रये उपवासं कृत्वा अन्तिमदिनस्य पूजां समाप्य यावत् भोजनार्थं सः उपविष्टवान् तावता दूर्वासाः तत्र आगतवान्। "किञ्चित् तिष्ठतु। नद्यां स्नात्वा आगच्छामि" इति उक्त्वा नदीं गतवान् च।

बहुकालानन्तरम् अपि दूर्वासाः न प्रत्यागतवान्। 'शुभमुहूर्तः यावत् अतीतः न भवेत् ततः पूर्वम् एव उपवासव्रतं समापनीयम्' इति उक्तवन्तः मुनयः अतिथयः च। गुरूणाम् आदेशानुसारं अम्बरीषः उपवासव्रतस्य समापनार्थं साङ्केतिकरूपेण तीर्थं स्वीकृतवान्।

तत्समये दूर्वासाः तत्र आगतवान्। प्रवृत्तं सर्वं दृष्ट्वा महता कोपेन- "मम आगमनतः पूर्वम् उपवासव्रतं समापयन् भवान् मम अपमाननम् आचरितवान्" इति उक्त्वा स्वजटया भूमिं ताडितवान्। तदा तत्र कश्चन राक्षसः उत्पन्नः। सः राक्षसः अम्बरीषं मारयितुम् उद्युक्तः। अम्बरीषः विष्णुचक्रं स्मृतवान्। तदा अपरक्षणे विष्णुचक्रं राक्षसं मारयित्वा दूर्वाससः समीपम् आगच्छत्।

एतेन भीतः दूर्वासाः धावन् देवेन्द्रसमीपं गतवान्। देवेन्द्रः एतद्विषये असहायकतां प्रकटीकृतवान्। ततः धावितः दूर्वासाः ब्रह्मणः समीपं गत्वा निराशया पुनः धावन् शिवसमीपं गतवान्। शिवः अपि रक्षणदाने असहायः। अन्ते दूर्वासाः वैकुण्ठं गत्वा विष्णुपादौ शरणं गतवान्।

विष्णुः मन्दहासं प्रकटयन्- "सुदर्शनचक्रस्य उपयोगः अम्बरीषस्य अधीनः। सुदर्शनचक्रस्य कार्यं निरोद्धुम् अहम् अपि अशक्तः। अतः भवान् अम्बरीषम् एव शरणं प्रार्थयतु" इति।

अनन्योपायः दूर्वासाः अम्बरीषसमीपं गत्वा क्षमां प्रार्थितवान्। अम्बरीषः विष्णुं स्मरन् चक्रं प्रतिस्वीकृतवान्। दूर्वाससं आदरातिथ्येन सत्कृतवान् च।






# १२

[मान्त्रिकपर्वतस्य समीपे चन्द्रवर्मा कापालिकां दृष्टवान्। तौ शङ्खमान्त्रिकस्य नाशार्थं व्यूहं रचितवन्तौ। सूर्योदयसमये मान्त्रिकः पर्वतशिखरम् आरूढवान्। मन्त्रजपार्थम् उद्युक्तः च। तदा चन्द्रवर्मा उपायेन तं प्रपाते पातितवान्। मान्त्रिकः स्वमन्त्रदण्डबलेन मन्त्रगृहं सरोवरे पातितवान्। तदनन्तरम् . . .]

महामान्त्रिकः पर्वतशिखरतः पतन् "महती वञ्चना! द्रोहः" इति उच्चैः आक्रोशनं कृतवान्। पतन् एव मन्त्रगृहं प्रति मन्त्रदण्डं क्षिपन् मन्त्रम् उच्चारितवान्। एतत् दृष्ट्वा कापालिका "हन्त! सर्वनाशः जातः" इति वदन्ती भूमौ पतितवती।

अत्रान्तरे मान्त्रिकगृहं महता शब्देन स्फोटितम् अभवत्। समग्रं भवनं ततः उद्गतम्। आकाशे प्लवमानं भवनं दृष्ट्वा 'एतत् इदानीम् आवयोः उपरि पतति' इति आशङ्कया चन्द्रवर्मा भीतः। किन्तु तथा किमपि न जातम्। तत् भवनं 'धडाल्' इति शब्द-पूर्वकं सरोवरे पतितम्। सरोवरजलम् उद्गतम्। वृष्टिरूपेण सर्वत्र पतितं च।

अविचिन्तितघटनाभिः चन्द्रवर्मा मूकः निश्चलः च। तस्य शरीरं निरन्तरं कम्पते। भूमौ पतितायाः कापालिकायाः विषये अपि न चिन्तयति सः।



"वर्मन् !" इति कापालिकायाः क्षीणः ध्वनिः श्रुतः। सा पार्श्वस्थां शिलाम् आधारत्वेन गृह्णती उत्थातुं प्रयत्नं करोति स्म। चन्द्रवर्मा धावन् गत्वा कापालिकायाः साहाय्यं कृतवान्।

कापालिका उत्थाय आत्मनः समतोलनं रक्षन्ती उक्तवती- "चन्द्रवर्मन्! यत् दुरदृष्टं मां पीडयति तदेव भवन्तम् अपि पीडयति इति भाति। मान्त्रिकः अस्माकम् आशाः जले मज्जितवान्। महता कष्टेन भवान् अत्र आगतवान्। अन्ते किं वा सिद्धम्? निराशा केवलम् अवशिष्टा। एवं भवेत् इति मम कल्पना अपि न आसीत्। भवन्तम् अस्मिन् कार्ये नियोजयन्ती अहम् अकार्यं कृतवती" इति।

"तथा न वदतु कापालिके! अग्रे किं भवेत् इति कः वा जानाति? दैवाधीनं किल जगत् सर्वम्? ललाटे यथा लिखितं तथा प्रवृत्तम्। अत्र कस्यापि दोषः नास्ति। मन्त्रगृहेण सह तत्रस्थाः अपूर्वाः शक्तयः अपि सरोवरे निमग्नाः इति चिन्तयति वा भवती? तासां शक्तीनां प्राप्तौ अन्यः उपायः कोऽपि नास्ति वा?" इति पृष्टवान् चन्द्रवर्मा।

"नष्टस्य प्राप्तिः कथं वा शक्यम्? मन्त्रगृहे न केवलं शङ्खः, अपि तु इतराणि अपूर्वशक्तिशालीनि वस्तूनि अपि आसन्। अहं तं शङ्खम् इच्छामि स्म। तत् तु नष्टम्। भवतः राज्यं प्रतिस्वीकर्तुम् उपकारकाणि अन्यानि वस्तूनि अपि तत्र आसन्। तानि अपि नष्टानि। अतः विशेषतः हानिः भवतः एव" इति उक्तवती कापालिका।

'अत्युपयुक्तानि वस्तूनि अन्तिमक्षणे हस्तच्युतानि जातानि किल!' इति खेदम् अनुभूतवान् चन्द्रवर्मा। तथापि खेदभावम् अप्रकटयन् सः उक्तवान्- "कापालिके! गतं न शोचयेत् प्राज्ञः। यत् नष्टं तत् विस्मरामः। अन्यः कोऽपि लाभः न प्राप्तः स्यात्। किन्तु क्रूरः मान्त्रिकः यमसदनं प्रेषितः किल! तत् न सामान्यकार्यम्। तावता एव तृप्तैः भाव्यम्। कापालिके! पुनर्यौवनदायकः शङ्खः तु नष्टः एव। तादृशम् अपूर्वशक्तिशालि वस्तु



अन्यत्र कुत्रापि न स्यात् वा ? तद्वस्तु प्रपञ्चे यत्र कुत्रापि वा भवतु, अहं तत् आनीय दास्यामि'' इति ।

''प्रपञ्चे अन्यत्र कुत्रापि शङ्खसदृशं वस्तु न लभ्यते एव भोः चन्द्रवर्मन् ! शङ्खः नष्टः चेत् अस्तु नाम । सामान्यमानवानाम् जीवनस्य अपेक्षया अधिककालं जीवितवती अहम् । 'अतः चिरकालं जीवनीयम्' इति आशा अपि मम नष्टप्राया । यत् अनुभोक्तव्यं तत्सर्वम् अनुभुक्तवती अहम् । अतः इतोऽपि चिरकालं जीवनेन न किमपि विशेषप्रयोजनम् । इदानीं तु मम चिन्ता भवद्विषये एव । मम निमित्तं भवान् बहु कष्टं सोढवान् । प्राणापायम् अपि अविगणय्य कार्यं कृतवान् । अहं किञ्चिदपि प्रत्युपकारं कर्तुं न शक्तवती । तदेव दुःखं मम'' इति निराशया उक्तवती कापालिका ।

''मम विषये कियती प्रीतिः कापालिकायाः ! अपूर्वशक्तिशालिनः शङ्खस्य प्राप्त्यर्थम् एव सा बहुकालात् प्रयत्नं कुर्वती आसीत् । तच्च इदानीं निष्फलम् । तथापि सा न तथा चिन्तामग्ना । राज्यप्राप्त्यर्थं मम यः अवकाशः आसीत् स च नष्टः इत्येव सा चिन्तयन्ती अस्ति । कीदृशः भावबन्धः एषः ! प्रायः आवां पूर्वजन्मनि सहोदरौ आस्व । अन्यथा एतादृशः हृत्पूर्वकः भावबन्धः कथं वा स्यात् ?'' इति चिन्तितवान् चन्द्रवर्मा ।

''कापालिके ! भवत्या अहं न उपकृतः इति तु न । नद्यां पतितः अहं यदा भवत्याः अरण्यं आगतः तदा भवती आश्रयदानेन मां रक्षितवती । निराशे मयि उत्साहं पूरितवती । एतदेव भवत्याः उपकारं प्रमाणीकर्तुम् अलम् । एतदतिरिच्य भवत्याः अनुग्रहेण एव इदानीम् अहं पशुपक्षिणां भाषां ज्ञातुं समर्थः अस्मि । अतः खेदः मास्तु । अग्रे किं करणीयम् इति प्रथमं चिन्तयावः । मया किं करणीयम् इति आदिशतु'' इति उक्तवान् चन्द्रवर्मा ।

कापालिका किञ्चित्कालं पर्वतशिखरं पश्यन्ती चिन्तामग्ना आसीत् । अनन्तरं सा उक्तवती- ''चन्द्रवर्मन् ! इतःपरम् आवयोः




तद्गुल्मानां च साहाय्येन गच्छन्ती तम् अनुसृतवती। कालनागः तयोः पृष्ठतः प्रस्थितवान्।

पर्वतशिखरम् आरुह्य चन्द्रवर्मा यतः महामान्त्रिकः पातितः आसीत् तत्र गत्वा प्रपाते दृष्टिं प्रसारितवान्। अगाधे प्रपाते शिलानाम् उपरि अधोमुखतया पतितः मान्त्रिकः अस्पष्टतया तेन दृष्टः। सूक्ष्मं परीक्षणेन तेन ज्ञातं यत् इतोऽपि मान्त्रिकः न मृतः। हस्तादीनां चालनं दृश्यते स्म।

चन्द्रवर्मा समीपम् आगच्छन्तीं कापालिकां "पश्यतु, शङ्खमान्त्रिकः इतोऽपि न मृतः। मन्त्रशक्तिः तं रक्षति इति भाति। तं परितः प्रभावलयः अस्पष्टतया दृश्यते। अङ्गविकलः सन् अपि वा यदि सः जीवेत् तर्हि आवयोः अपायः निश्चितः एव। अतः अहं शिलापातनेन तस्य शिरः भञ्जयामि। एतेन विशेषतः पापलेपः मम न स्यात् किल?" इति वदन् मान्त्रिकस्य शिरः उद्दिश्य बृहतीं शिलां पातितवान्। कापालिका तस्य कार्यं मन्दहासपूर्वकं स्वागतीकृतवती।

अनन्तरं कापालिका चन्द्रवर्मा च शङ्खमान्त्रिकस्य गृहं प्रति गतवन्तौ। तत्प्रदेशे यत्र पूर्वं गृहम् आसीत् तत्र गर्तः दृश्यते स्म। चन्द्रवर्मा तत् प्रदेशम् अङ्गुल्या प्रदर्शयन् कापालिकाम् पृष्टवान्- "अत्र तु गृह-

मार्गः भिन्नः भवेत्। एतत् अनिवार्यम्। अहं मम शेषायुष्यम् अत्रैव पर्वतस्य उपरि यापयिष्यामि। एषा मम जीवनस्य अन्तिमा आशा। अस्मिन् रमणीये प्रशान्ते च परिसरे अहं देवचिन्तनं कुर्वती आमरणं जीविष्यामि" इति।

"एवं तर्हि अहं भवत्याः कृते पर्वतशिखरे कुत्रचित् उत्तमे स्थले कुटीरम् एकं निर्मास्यामि। भवती कुत्रचित् स्थिरा जाता चेत् मम अपि निश्चिन्तता। अतः पर्वतशिखरं गच्छावः वा?" इति पृष्टवान् चन्द्रवर्मा।

कापालिका अङ्गीकारं प्रदर्शयन्ती शिरः चालितवती। चन्द्रवर्मा पादमार्गेण पर्वतम् आरोढुं प्रवृत्तः। कापालिका शिलानां

निर्माणार्थम् निवेशनं सिद्धम् अस्ति । अत्रैव सुलभतया गृहं निर्मातुं शक्यते । एतत् भवत्याः अनुमतं वा ? दुष्टस्य मान्त्रिकस्य भूमिः इति पापभीतिः तु नास्ति किल ?'' इति ।




''तथा किमपि नास्ति'' इति वदन्ती कापालिका तत्र गृहनिर्माणार्थम् अङ्गीकारं दत्तवती । तत्समये सूर्यः आकाशमध्ये प्रकाशते स्म । चन्द्रवर्मा परितः दृष्टिं प्रसारयन् दीर्घं निश्वसन् ''बुभुक्षा तीव्रं बाधते । यदि आहारः कोऽपि लब्धः स्यात् तर्हि कियत् समीचीनं भवेत् ! किन्तु फलानि प्राप्तुं पर्वतमूलं गन्तव्यम् । किन्तु कः अन्यः गच्छेत् ? मया एव गन्तव्यम् । एवम् गमनम् अनिवार्यम्'' इति ।

चन्द्रवर्मणः शरीरायासं कापालिका जानाति एव । सा कालनागस्य दिशि दृष्टिं प्रसार्य- ''कालनाग ! भवन्तं पूर्वतनं मानव-रूपं प्रापयामि । इतः परं भवान् स्वतन्त्रः । यत्र इच्छति तत्र गच्छतु'' इति उक्तवती । मन्त्रम् उच्चारयन्ती अस्थिदण्डेन कालनागस्य शिरः स्पृष्टवती ।

तत्क्षणे एव सुन्दरः दृढकायः सुदृढाङ्गः उन्नतः कश्चन च पुरुषः प्रत्यक्षम् अभवत् । कालनागस्य निजस्वरूपं दृष्ट्वा चन्द्रवर्मा आश्चर्यचकितः तृप्तः च ।

''आर्ये ! कापालिके ! भवत्याः कृपया अहं कृतज्ञः अस्मि'' इति वदन् सः पुरुषः कापालिकां नमस्कृतवान् । अनन्तरं चन्द्रवर्माणम् उद्दिश्य- ''श्रीमन् ! भवतः उपकारः अपि अविस्मरणीयः एव । आजीवनं मां भवतः सेवकं चिन्तयतु भवान्'' इति उक्तवान् सः ।

''पूर्वं भवान् मानवरूपेण यदा आसीत् तदा भवतः नाम किम् आसीत् इति अहं न जानामि । मम सर्पकेतुः इति कश्चन प्रबलः शत्रुः अस्ति । मम स्नेहितं भवन्तम् अहं कालकेतुः इति नाम्ना सम्बोधयितुम् इच्छामि । किम् अनुमतं भवतः ? यदि असन्तोषः तर्हि निस्सङ्कोचं वदतु भवान्'' इति ।




"यथा भवान् इच्छति तथैव अस्तु । इतः परं मम नाम कालकेतुः इत्येव भवतु । भवतः शत्रोः सर्पकेतोः बलिं स्वीकृत्य कालकेतुः इति भवता सूचितं नाम सार्थकीकरिष्यामि" इति उक्तवान् सः युवकः ।

अनन्तरं सः युवकः त्वरया पर्वतमूलं गत्वा सरोवरतीरे स्थितेभ्यः वृक्षेभ्यः विविधानि मधुरफलानि आनीतवान् । त्रयः अपि छायायाम् उपविश्य फलानि खादितवन्तः । समीपे प्रवहन्त्याः उपनद्याः निर्मलं जलं आतृप्ति पीतवन्तः च ।

किञ्चित्कालं विश्रान्तिम् अनुभूय कालकेतुः चन्द्रवर्मा च मान्त्रिकस्य निवेशने कापालिकायाः कृते गृहं निर्मातुम् आरब्धवन्तः । महान्तम् अपि श्रमम् अविगणय्य राक्षसवत् कार्यं कुर्वतः कालकेतोः साहाय्ये विद्यमाने किं पुनः वक्तव्यम् ? सायङ्कालतः पूर्वं गृहनिर्माणस्य अधिकांशः समाप्तः एव ।

तस्यां रात्रौ ते त्रयः अपि तस्मिन् एव कुटीरे शयनं कृतवन्तः । मध्यरात्रे अतीते अपि चन्द्रवर्मा निद्रां न प्राप्तवान् । सः अग्रिमकार्यक्रमस्य स्वरूपं चिन्तयन् आसीत् । "कापालिकायाः साहाय्येन अपूर्वाः शक्तयः सम्पादनीयाः, तेन च राज्यं पुनः प्राप्तव्यम् इति योजना तु इदानीं विपर्यस्ता । मम पितरं मारयित्वा बलात्कारेण राज्यं वशीकृतवान् सर्पकेतुः इदानीं माहिष्मतीनगरे सिंहासने विराजते । सः यदि पराजेतव्यः तर्हि महती सेना अपेक्षिता एव । सैन्यसङ्ग्रहणार्थं विपुलं धनम् आवश्यकम् । तावत् धनम् अहं कुतः सम्पादयामि ? तादृशः समर्थः स्नेहितः साहाय्यकः मम कः वा अस्ति ? . . ."

एवं चिन्तामग्नः चन्द्रवर्मा निद्राम् अप्राप्य उत्थाय बहिः आगतवान् । चन्द्रिकायाः रसम् आस्वादयन् इतस्ततः सञ्चारं कर्तुम् आरब्धवान् । किञ्चित्कालानन्तरं कालकेतुः तस्य समीपम् आगत्य उक्तवान्- "श्रीमन् ! मध्यरात्रे भवान् एवं निद्राहीनः सन् अटति किल ? किमर्थम् ? कया समस्यया भवान् चिन्ताकुलः ? यदि अहं तां समस्यां

श्रावयितुम् अर्हः तर्हि माम् अपि समस्यां निवेदयतु। अहम् अपि भवतः चिन्तायाः सहभागी भवामि'' इति।

''तत् किं पृच्छति कालकेतो! मम सहस्रशः समस्याः'' इति उद्गारं प्रकटय चन्द्रवर्मा उक्तवान्- ''अहं राज्यभ्रष्टः कश्चन राजकुमारः इति भवान् जानाति एव किल? कापालिकायाः साहाय्यं बहुधा निरीक्षितवान् आसम्। किन्तु मान्त्रिकः मन्त्रगृहं नाशयित्वा एव मरणं गतः। तच्च गृहं सरोवरे निमग्नम्। 'इतःपरं कुत्र गन्तव्यम्? कस्य साहाय्यं कथं प्राप्तव्यम्?' इत्यादिकं किमपि न जानामि अहम्। समीपे कुत्रापि मानवानां वासस्थानं स्यात् वा न वा इत्यपि न जानामि। यदि स्यात् चेदपि तत्रत्याः मम साहाय्यं कुर्युः किल?'' इति।

''श्रीमन्! पर्वतस्य उत्तरस्यां दिशि शतयोजनदूरे जनवसतिः अस्ति। तत्र गच्छति चेत् किमपि प्रयोजनं सिध्येत्। अहम् अपि भवता सह गन्तुम् इच्छामि। किन्तु वृद्धां कापालिकाम् एकाकिनीम् त्यक्त्वा गमनं न उचितं किल? सा इतोऽपि दीर्घकालं न जीविष्यति। तदनन्तरम् अहं भूतवर्तमान-भविष्यत्सूचकस्य तत्काचकगोलकस्य साहाय्येन भवतः समीपम् अवश्यम् आगमिष्यामि। तत् काचकगोलकं भवतः उपकाराय अपि




भवेत्'' इति उक्तवान् कालकेतुः।

'कालकेतोः वचनं न तथा उत्साहदायकम्। पर्वतशिखराणि नदीप्रपातघनारण्यानि च तीर्त्वा एव किल शतयोजनदूरं गतव्यम्? ततः परम् एव किल मनुष्यमात्रस्य मुखदर्शनम्? गमन-समये कीदृशाः विघ्नाः आपतेयुः इति को वा जानाति? प्राणापायः भवति चेदपि तत्र न आश्चर्यम्। एवं स्थिते अपि गमनम् अनिवार्यम् आसीत्। अत्र स्थित्वा किं वा साधयितुं शक्येत? ...'

एवं सूर्योदयपर्यन्तम् अपि सः चिन्तयन् एव आसीत्। सूर्योदयानन्तरं उत्थाय प्रातर्विधिं समाप्य सरोवरे स्नात्वा कापालिकायाः समीपम् आगत्य प्रयाणनिश्चयं निवेदितवान्।

तदा आशिषा अनुगृह्णती कापालिका उक्तवती- "चन्द्रवर्मन् ! यावन्ति वा कष्टानि आपतन्तु नाम, तानि सर्वाणि निवार्य भवान् शत्रून् पराजित्य राज्यं पुनः प्राप्स्यति इति मम दृढः विश्वासः अस्ति। कुलदेवतायाः अनुग्रहः भवन्तं सदा रक्षिष्यति। शुभाः ते पन्थानः सन्तु" इति।

चन्द्रवर्मा कालकेतुं प्रयाणानुमतिं सम्प्रार्थ्य पर्वतशिखरात् अवतीर्णः। ततः महारण्यं प्रविश्य उत्तरदिशम् अनुसृतवान्।

मध्याह्नपर्यन्तं सः गच्छन् एव आसीत्। सुदीर्घप्रयाणेन श्रान्तः सः विशालस्य कस्यचित् वृक्षस्य मूलम् आश्रितवान्। यावत् शयनार्थं भूमिं स्वच्छीकुर्वन् आसीत् तावत् सः व्याममिताम् अयोमयीं शृङ्खलां प्राप्तवान्। आश्चर्यचकितः सः- "अस्मिन् महारण्ये एतत् कथं वा आगतम् ?" इति चिन्तयन् तां शृङ्खलां परीक्षितवान्। बहोः कालतः उपयोगः न कृतः इति कारणतः अयस्किट्टेन व्याप्ता आसीत् सा शृङ्खला।

अत्रान्तरे अकस्मात् दूरे उत्पन्नं महागर्जनसदृशं भषणं तेन श्रुतम्।

एतेन तस्य शरीरे रोमाञ्चः उत्पन्नः। सः झटिति उत्थाय कोषतः खड्गम् आकृष्य अपायं सम्मुखीकर्तुं सज्जीभूय परितः दृष्टिं प्रसारितवान्। शिलातः शिलाम् उत्प्लुत्य आगच्छन्तं विकृतमुखं शुनकं दूरतः दृष्टवान् सः। "एषः न सामान्यः शुनकः। रूपान्तरेण स्थितः राक्षसः एव स्यात्" इति निश्चित्य चन्द्रवर्मा दक्षिणहस्तेन खड्गं दृढं गृहीत्वा वामहस्तेन शृङ्खलाम् उन्नीतवान्। अस्मिन् सन्दर्भे आत्मरक्षणार्थम् एव एषा अयः शृङ्खला मया प्राप्ता" इति सन्तोषम् अनुभूतवान् सः।

राक्षसशुनकः पुरतः स्थितं गुल्मं प्रविश्य पुनः एकवारं घोरं भषणम् अकरोत्। तेनैव सह गुल्मतः बहिः आगत्य चन्द्रवर्मणः उपरि आक्रमणार्थम् उद्युक्तः अभवत् च।

(अनुवर्तते)






# महिषदर्शनम्

"पराजयस्य अङ्गीकारः नाम अपमानस्य विषयः" इति चिन्तयन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितः च। तदा शवान्तर्गतः वेतालः अवदत्- "राजन्! भयङ्करे अस्मिन् अर्धरात्रे बहुवारं वैफल्ये प्राप्ते अपि, पुनः यत् आगच्छति तत्र परोपकारः न, अपि तु स्वार्थः कारणं स्यात् इति अहं चिन्तयामि। एवं तर्हि एकं विषयं स्मारयितुम् इच्छामि। धनकनकादिकं कीर्तिवैभवादिकं च अपेक्षमाणाः बहवः कठोरं परिश्रमं कृत्वापि फलप्राप्तिसमये मनश्चाञ्चल्येन प्राप्तं फलं तिरस्कुर्वन्ति। तादृशः न भवतु भवान्। पूर्वोक्तगुणयुतः पूर्वं कश्चन सुकुमारः नाम वैद्यः आसीत्। भवतः मार्गायासपरिहारार्थं तस्य कथां श्रावयामि" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा–

"पूर्वं विन्ध्यप्रान्ते चन्द्रपुरे भैरवाचार्यः नाम प्रसिद्धः वैद्यः आसीत्। तस्य अद्वितीयः पुत्रः सुकुमारः। भैरवाचार्यस्य नाम सर्वत्र प्रसिद्धम् आसीत्। किन्तु चन्द्रपुरग्रामे निर्धनिकाः एव अधिकाः। अतः भैरवाचार्यः स्वजीवने अधिकं सम्पादयितुं न शक्तवान्। भैरवाचार्यः राजाश्रयं प्राप्तुम् इच्छति स्म। किन्तु 'वैद्यकीये आत्मनः विशेषपाण्डित्यं नास्ति' इति सः स्वयं जानाति स्म। अतः सः यावत् लब्धं तावता एव तृप्तिम् अनुभवन् चन्द्रपुरे एव जीवनं यापितवान्।

कदाचित् भैरवाचार्यः तीव्ररोगेण पीडितः अभवत्। बहुदिनानन्तरम् अपि यदा रोगः न दूरङ्गतः तदा सः ज्ञातवान् यत् आत्मनः अन्तिमकालः सन्निहितः इति। अतः सः प्रीतिपात्रं पुत्रम् आहूय उक्तवान्- "पुत्र! मम अन्तिमकालः सन्निहितः। भवान् तु इदानीं षोडशवर्षीयः। भवतः कृते मया सञ्चयः अपि न कृतः। भवतः अध्ययनं न समाप्तम्। भवान् यावत् वैद्यकीयं जानाति तावता किं वा कर्तुं शक्यते? अतः अहं चिन्तयामि- इतःपरं भवतः वैद्यकीयवृत्तौ परिश्रमः मास्तु। ग्रामीणानां साहाय्येन कृषिकार्यस्य आरम्भं करोतु। तेन भवतः जीवनं सुखमयं भविष्यति" इति।

सुकुमारः बुद्धिमान् आग्रहशीलः च। कार्येषु तस्य महती श्रद्धा। बाल्यात् अपि तस्य इच्छा वैद्यकीयपठने एव। सः चिन्तयति स्म- "कालान्तरे अहं चिकित्साशास्त्रे विशेषपाण्डित्यं प्राप्य राजधानीं गमिष्यामि। यथेष्टं धनार्जनं कृत्वा कीर्तिं सम्पादयिष्यामि" इति।

अतः सः पितरम् उक्तवान्- "तात! भवान् भवतः मरणस्य विचारं त्यजतु नाम। तदा एव भवान् स्वस्थः भविष्यति। अथवा दैवं यदि विपरीतम् एव आचरेत् तर्हि अपि अहं कृषिं न करिष्यामि। वैद्यवृत्त्या एव जीविष्यामि" इति।

पुत्रस्य उत्तरेण आश्चर्यं प्रकटयन् भैरवाचार्यः उक्तवान्- "एवं तर्हि भवान् भवतः

अर्धज्ञानेन एव रोगिणां चिकित्सां करिष्यति ? तथा कृतं चेत् भवान् मूर्खः इति ख्यातः भविष्यति। जनानां प्राणापहारकः भविष्यति च'' इति।

''वैद्यकीयवृत्तेः आश्रयणार्थम् इदानीं मम यत् ज्ञानम् अस्ति तत् न पर्याप्तम् इति अहं जानामि। किन्तु वैद्यकीयस्य प्राथमिक-विद्यार्थिनः दृष्ट्या तु मम अधिकं ज्ञानम् अस्ति। एतदाधारेण महेन्द्रयोगिनः शिष्यत्वं स्वीकृत्य परिपूर्णं ज्ञानं प्राप्स्यामि'' इति उक्तवान् सुकुमारः।



पुत्रस्य विश्वासपूर्णवचनेन भैरवाचार्यः सन्तृप्तः। एतदनन्तरम् एकसप्ताहाभ्यन्तरे भैरवाचार्यः दिवङ्गतः। सुकुमारः पितुः अन्तिमसंस्कारं यथाविधि कृत्वा महेन्द्रयोगिनः आश्रमं प्रति प्रस्थितवान्।

महेन्द्रयोगिनः आश्रमः शतयोजनदूरे अरण्यमध्ये आसीत्। महेन्द्रयोगी बहुषु शास्त्रेषु पण्डितः। विशेषतः योगशास्त्रे तस्य असदृशं पाण्डित्यम्। सः कदापि कमपि सुलभतया शिष्यत्वेन न स्वीकरोति। बहुविध-परीक्षासु उत्तीर्णः एव तस्य शिष्यः भवितुम् अर्हति स्म। किन्तु तदीयपरीक्षासु उत्तीर्णता न तथा सुलभा।

आश्रमं गत्वा सुकुमारः विनयेन महेन्द्र-योगिनं नमस्कृतवान्। महेन्द्रयोगी तं पृष्टवान्-''भवान् कां विद्यां पठितुम् इच्छति'' इति।

सुकुमारः ''वैद्यकीयशास्त्रपठने मम इच्छा'' इति उक्तवान्। महेन्द्रयोगी सुकुमारं सम्यक् परीक्ष्य स्वशिष्यत्वेन स्वीकृतवान्। सुकुमारः चत्वारि वर्षाणि यावत् आश्रमे वैद्यकीयविद्यायाः अभ्यासं कृतवान्। सुकुमारस्य श्रद्धया बुद्धिमत्तया च आकृष्टः महेन्द्रयोगी एतस्य विषये विशेषप्रीतिमान् आसीत्।

महेन्द्रयोगी इदानीं वृद्धः। एकदा सः सर्वान् शिष्यान् आहूय उक्तवान्- ''इतःपरम् अहं मम शेषजीवनं मौनपूर्वकं तपसि याप-यितुम् इच्छामि। अतः इतःपरम् आश्रमे पठनपाठनादिकं न प्रचलिष्यति। भवन्तः सर्वे स्वस्वक्षेत्रे योग्यतां प्राप्तवन्तः सन्ति।



इतः गमनतः पूर्वं मत्सकाशात् किमपि ज्ञातुम् इच्छन्ति चेत् निस्सङ्कोचं प्रष्टुम् अर्हन्ति'' इति ।

एतदनन्तरं महेन्द्रयोगी प्रकोष्ठे उपविश्य क्रमशः एकैकम् अन्तः आहूय तस्य इच्छायाः विषये पृष्टवान्, उचितं मार्गदर्शनं कृतवान् च। पर्यायक्रमेण सुकुमारः अपि प्रकोष्ठं प्रविश्य गुरुं नमस्कृत्य निवेदितवान्- ''गुरुदेव ! मम कुले बहवः वैद्यकीयवृत्त्या जीवनं कृतवन्तः । किन्तु कोऽपि निर्धनतारेखाम् अतिक्रम्य न गतवान्'' इति ।

''अस्तु, एवं तर्हि भवान् किम् इच्छति ?'' इति पृष्टवान् महेन्द्रयोगी ।

''गुरुदेव ! यथा जन्म सत्यं तथा मृत्युः अपि सत्यम् एव । किन्तु जननमरणयोः मध्ये यत् जीवनं तत् बहुधा व्याधिग्रस्तम् । मरणस्य दूरीकरणार्थं पूर्वज्ञानार्थं वा काचित् शक्तिः अपेक्षिता'' इति सुकुमारः उक्तवान् ।

सुकुमारस्य वचनं श्रुत्वा महेन्द्रयोगी क्षणकालं स्तब्धः । अनन्तरं सः उक्तवान्- ''पुत्र ! मरणस्य निवारणार्थं किमपि औषधं नास्ति । औषधं तु रोगस्य उपशमनं कर्तुं शक्नोति । तथापि भवतः इच्छापूर्त्यै एकां शक्तिं ददामि । भवान् यस्य चिकित्सां कर्तुम् इच्छति, तस्य शिरसः उपरि यमराजस्य महिषः यदि दृश्यते तर्हि तस्य आयुः समाप्तम् इत्यर्थः । तस्मै औषधदानेन किमपि प्रयोजनं नास्ति । अतः तादृशस्य चिकित्सां न अङ्गीकरोतु । तं महिषं भवान् केवलं द्रष्टुं शक्नोति, न इतरे'' इति ।

गुरुदेवस्य एतेन अनुग्रहेण सुकुमारः सन्तुष्टः । सः उक्तवान्- ''आचार्य ! भवतः अनुग्रहेण अहं कृतज्ञः अस्मि । मम एका निवेदना अस्ति यत् भवान् तादृशम् एकम् उपायं सूचयतु येन मृत्युदूतं तं महिषं मम वैद्यकीयजीवने एकवारं निवारयितुं शक्नुयाम्'' इति ।

महेन्द्रयोगी क्षणकालं गम्भीरः जातः । पुनः उक्तवान्- ''अस्तु नाम, यस्य कस्यापि रोगिणः रक्षणार्थं भवान् एकवारं यममहिषं निवारयितुं शक्नोति । किन्तु तदनन्तरं भवता

वैद्यकीयवृत्तिः एव त्यक्तव्या भविष्यति । तथापि भवान् पृष्टवान् इति कारणतः वदामि- यदा भवान् यमराजस्य महिषं पश्यति तत्सन्दर्भे दुर्गायाः वाहनं सिंहं स्मृत्वा वदतु- 'पश्यतु, एषः दुर्गायाः वाहनम् । महिषासुर, भवान् शीघ्रम् इतः धावतु' इति । एतेन तत्क्षणे एव महिषः अदृश्यतां गच्छति । रोगी च उज्जीवितः भविष्यति'' इति ।

सुकुमारः गुरुं साष्टाङ्गं नमस्कृत्य तदीयपादधूलिं शिरसि धृत्वा गृहं प्रत्यागतवान् । अल्पे एव काले समर्थवैद्यत्वेन सः प्रसिद्धः अभवत् ।

सुकुमारः यस्य चिकित्साम् अङ्गीकरोति सः स्वस्थः भवति एव । किन्तु केषाञ्चित् चिकित्सां सः न अङ्गीकरोति । ''एतस्य रोगस्य औषधं वैद्यशास्त्रे एव न उक्तम्'' इति. वदति च । येषां शिरोभागे तेन महिषः दृष्टः तादृशानां चिकित्सां सः निराकरोति स्म । किन्तु एतादृशी परिस्थितिः विरला । बहवः जनाः तस्य चिकित्सया स्वस्थाः भवन्ति स्म । अतः एव सः– 'वैद्यस्य हस्तगुणः अपूर्वः । वैद्यकीयज्ञानं तु असदृशम्' इति प्रसिद्धिं प्राप्तवान् ।

दिनानि अतीतानि । कदाचित् महाराजः तं राजधानीम् आगन्तुम् आहूतवान् । सुकुमारः सद्यः एव राजधानीं प्राप्तवान् । महाराजस्य प्रीतिपात्रं पुत्री सुवर्णा दीर्घकालिकरोगेण पीडिता आसीत् । बहुविधचिकित्सया अपि





एतेन उत्तरेण विभूतिसिंहः क्रुद्धः । सः कोपेन उक्तवान्– "मया श्रुतं यत् भवान् विषमावस्थां प्राप्तानाम् अपि रोगाणां चिकित्सां कृतवान् इति । जनाः वदन्ति- भवान् यस्य चिकित्साम् अङ्गीकरोति सः स्वस्थः भविष्यति इति । अतः एव भवन्तम् अत्र आनायितवान् । भवान् तु प्रयत्नम् अकृत्वा एव भविष्यं जानन् इव वदति । एतत् एव वा भवतः शास्त्रपाण्डित्यम् ? यदि भवान् राजकुमार्याः चिकित्सां न अङ्गीकरोति तर्हि भवता देशनिष्कासनदण्डः अनुभोक्तव्यः भविष्यति इति स्मरतु" इति ।

महाराजस्य वचनं श्रुत्वा सुकुमारः विनयेन उक्तवान्– "अहं पूर्वम् एव उक्तवान् यत् एतस्याः रोगस्य चिकित्सा वैद्यशास्त्रे न उक्ता इति । अज्ञातस्य रोगस्य चिकित्साम् अहं कथं करोमि? भवान् यथा इच्छति तथा करोतु । किन्तु अहम् एतस्याः चिकित्सां कर्तुं न शक्नोमि" इति ।

एतेन नितरां क्रुद्धः राजा सैनिकान् आदिष्टवान्- "एतम् इदानीम् एव राज्यतः बहिः प्रेषयन्तु । इतःपरम् एषः अस्माकं देशे कुत्रापि न दृश्येत । यदि कदाचित् दृष्टः चेत् कारागारे स्थापयन्तु" इति ।

वेतालः एवं कथां समाप्य पृष्टवान्- "राजन् ! सुकुमारस्य एषः व्यवहारः उचितः

राजकुमार्याः सुवर्णायाः रोगः न शान्तः । अतः एव 'राजकुमार्याः रोगं यः दूरीकरोति तस्मै भूस्वामित्वम् एकलक्षं सुवर्णमुद्राः च दीयन्ते' इति घोषणा कृता आसीत् ।

राजधानीम् आगतं सुकुमारं महाराजः विभूतिसिंहः स्वयं पुत्र्याः प्रकोष्ठं नीतवान् । सुकुमारः राजकुमारीं परीक्षादृष्ट्या दृष्टवान् । तस्याः शिरोभागे तेन यममहिषः दृष्टः ।

एकवारं सः चिन्तितवान्– 'देवीं स्मृत्वा एतं महिषम् इतः निवारयामि' इति । तथापि आत्मानं निगृह्य महाराजम् उक्तवान्– "प्रभो, एषः तु विचित्रः रोगः । चिकित्साशास्त्रे एतस्य औषधं नास्ति । अतः अहम् एतस्याः चिकित्साकरणे असहायः । क्षाम्यतु" इति ।

इति भवान् चिन्तयति वा ? वैद्यकीयज्ञानेन यथेष्टं धनं कीर्तिं च सम्पादयितुम् इच्छति स्म सः। राजकुमार्याः सुवर्णायाः रोगः निवारितः चेत् निश्चयेन यथेष्टं धनं प्राप्यते। यदा राजकुमार्याः शिरोभागे यममहिषः दृष्टः तदा देवीनामजपपूर्वकं सिंहं स्मृत्वा महिषः दूरं प्रेषितः चेत् यथेष्टं धनम् अलभिष्यत किल ? तदर्थम् उत्तमः अवकाशः आसीत् एषः। एवं स्थिते अपि सः देशात् बहिर्गमनं किमर्थम् अङ्गीकृतवान् ? किं सः हिताहितविवेकं कर्तुम् असमर्थः ? उत मूर्खः ? एतस्य सन्देहस्य उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः उक्तवान्- ''धनं कीर्तिं च प्राप्तुं सुकुमारः बहु इच्छति स्म इति तु सत्यम् एव। अतः एव सः महेन्द्रयोगिनं विशेष-अनुग्रहार्थं प्रार्थितवान्। महिषापसरणस्य शक्तिं प्राप्तवान् च। तदानीं तस्य विचारः अपि आसीत् यत् कस्यचित् धनिकस्य रोगं निवार्य यथेष्टं धनं सम्पादयिष्यामि इति। किन्तु विशेषशक्तिदानानन्तरं महेन्द्रयोगिना सूचितं यत् तस्याः उपयोगस्य अनन्तरं वैद्यकीयशक्तिः नष्टा भविष्यति इति। सुकुमारस्य जीवनस्य लक्ष्यं तु रोगनिवारणं, न तु धनसम्पादनम्। बहोः कालतः रोगिणां सेवया सः साफल्यं जनप्रियतां च प्राप्तवान् आसीत्। राजकुमार्याः चिकित्सायाः अर्थः तु वैद्यवृत्तेः त्यागः इत्येव। स्वसुखार्थं जनानां सेवां त्यक्तुं सः न इच्छति स्म। चिरकालं जनसेवा करणीया इति तस्य सुदृढः सङ्कल्पः। वैद्यकीयं न केवलं एका वृत्तिः, किन्तु सेवा अपि। एतं वास्तविकं तत्त्वं जानाति स्म सः। अतः एव सः राजकुमार्याः चिकित्सां तिरस्कृतवान्। एतेन सुकुमारस्य मनोवैशाल्यं प्रमाणितं भवति। सः न मूर्खः, अपि तु विवेकशीलः'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः वेतालः शवसहितः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।



# बाणस्य लक्ष्यम्

वीरवरः चत्वारिंशद्वर्षीयः कश्चन कृषकः कदाचित् तस्य मनसि आलोचना आगता- "अहं जन्मनि किमपि न साधितवान्। इतरे मम समवयस्काः ममापेक्षया कनिष्ठाः अपि कीर्तिशालिनः सञ्जाताः। केचन लक्षाधीशाः अपि जाताः। अहं तु अनामधेयः इव जीवामि" इति।

इतः परं जीवनं व्यर्थम् इति चिन्तयन् वीरवरः अरण्यं गतवान्। तत्र मार्गे कश्चन संन्यासी मिलितः। संन्यासी पृष्टवान्- "क्रूरमृगैः व्याप्तम् एतत् अरण्यं भवान् किमर्थम् आगतवान्"? इति।

"स्वामिन्! जीविते अहं किमपि न साधितवान्। अतः वैराग्येण अत्र आगतवान्" इति उक्तवान् वीरवरः।

"संन्यासी मन्दहासं प्रकटयन्- "किमपि न साधितवान् इति दुःखम् अनुभवति किल भवान्? एवं तर्हि किं साधनीयम् इति लक्ष्यम् आसीत् भवतः?" इति पृष्टवान्।

"निर्दिष्टं लक्ष्यं किमपि नास्ति" इति उक्तवान् वीरवरः। तदा संन्यासी पृष्टवान्- "बाणः लक्ष्ये न योजितः एव। एवं स्थिते लक्ष्यं न सिद्धम् इति खेदः किमर्थम्?" इति।

एतेन वीरवरः विवेकं प्राप्तवान्। तद्दिने एव सः 'अहं किमपि न साधितवान्' इति खेदं त्यक्तवान्। यावच्छक्यं तावत् कार्यं कुर्वन् तृप्त्या जीवनं यापितवान्।





# योग्यः साहाय्यकः

लक्ष्मीपुरस्य कस्यचित् भूस्वामिनः कार्यालये आप्तसचिवस्य साहाय्यकस्य स्थानं रिक्तम् आसीत्। 'एतदर्थं विशेषबुद्धिमताम् अवकाशः अस्ति' इति प्रकटितम् आसीत् अपि। आगतैः सह भूस्वामी स्वयं सम्भाषणं करोति स्म, तेषां परीक्षां करोति स्म च।

कदाचित् गौरङ्गः गम्भीरः इति युवक-द्वयम् एतत्स्थानार्थम् आगतम्। भूस्वामी प्रथमं गौराङ्गं कार्यालयस्य अन्तः आहूय पृष्टवान्- "अहं यानि कार्याणि वदामि तानि विनालोपं निर्वोढुं शक्नोति वा भवान्?" इति।

गौराङ्गः धैर्येण "श्रीमन्! विंशतिवर्षाणां कार्यानुभवः अस्ति मम। अद्यावधि कोऽपि मम कार्येषु लोपम् अन्वेष्टुं न शक्तवान्। विविधसंस्थानाधिपैः दत्तानि प्रशस्तिपत्राणि एव अत्र प्रमाणम्" इति उक्त्वा प्रमाणपत्र-समूहम् एव भूस्वामिनः हस्ते दत्तवान्।

भूस्वामी तानि सर्वाणि परिशील्य प्रत्यर्पितवान्। गौरङ्गः ततः बहिः आगतवान्। भूस्वामी गम्भीरम् अन्तः आहूय पूर्वतनं प्रश्नम् एव पृष्टवान्।

तदा गम्भीरः उक्तवान्- "श्रीमन्! एकम् अपि लोपं विना कार्यनिर्वहणं अशक्यम् एव। यदि कार्यं दत्तं स्यात् तर्हि सदा जागरूकः सन् कार्यं निर्वहामि इति तु प्रामाणिकतया वदामि" इति।

"एवं तर्हि विनालोपं कार्यं कर्तुम् अशक्तः भवान् एतत् स्थानम् अभिलषमाणः किमर्थम् आगतवान्?" इति पृष्टवान् भूस्वामी।

"क्षाम्यतु भवान्। दोषाः सहजाः। दोषाणां कारणं ज्ञात्वा ते पुनः यथा न भवेयुः तथा जागरूकतासमाश्रयणे एव कौशलम् अपेक्षितम्। दोषान् कृत्वा एम सर्वे अनुभवं प्राप्नुवन्ति। अनुभवेन च कार्यकौशलं

सिध्यति । मम कार्ये दोषाः भवेयुः । किन्तु अहं प्रामाणिकप्रयत्नेन अचिरात् एव कार्यदक्षतां तु प्राप्स्यामि एव'' इति विनयेन उक्तवान् गम्भीरः ।

''भवन्तम् अस्मिन् स्थाने नियोजितवान् अस्मि । श्वः आरभ्य अत्र आगत्य कार्यं करोतु'' इति उक्त्वा गम्भीरं प्रेषितवान् भूस्वामी ।

गम्भीरस्य गमनानन्तरं आप्तसचिवः आश्चर्येण पृष्टवान्- ''गौराङ्गाय बहुभिः प्रमाणपत्राणि दत्तानि सन्ति । एतेन ज्ञातुं शक्यते यत् पूर्वं सः यत्र यत्र कार्यं कृतवान् तत्र कदापि दोषं न कृतवान् इति । एवं स्थिते अपि भवान् गम्भीरम् एतत्पदे नियोजितवान् । गम्भीरस्य का योग्यता दृष्टा ?'' इति ।

तदा भूस्वामी हसन् उक्तवान्- ''गौराङ्गः वदति- अहं कुत्रापि दोषं न कृतवान् इति । तस्य वचने कः विश्वासः ? विनादोषं कार्यं तु दुष्करं किल ? अहं चिन्तयामि- ''गौराङ्गसदृशाः सर्वदा साहाय्यकानां द्वारा एव कार्यं कारयन्ति । दोषान् साहाय्यकानाम् उपरि आरोपयन्ति । स्वयं च कीर्तिं प्रमाणपत्रं च प्राप्नुवन्ति । एतत् सत्यं किल ?'' इति ।

भूस्वामिनः वचनेषु स्थितां सत्यतां ज्ञात्वा आप्तसचिवः उक्तवान्- ''भवतः वचनं सत्यम्'' इति ।

''कार्यनिर्वहणसन्दर्भे दोषाः सहजाः इति गम्भीरः प्रामाणिकतया अङ्गीकरोति । आत्मनः दोषस्य अङ्गीकारार्थम् महत् औदार्यम् अपेक्षितम् । दोषगोपनेन कोऽपि उन्नतिं प्राप्तुं न शक्नोति । शुद्धमनस्केन दोषाः स्वयम् अङ्गीकरणीयाः । गम्भीरे एतादृशाः गुणाः सन्ति । अतः एव तम् अत्र नियोजितवान्'' इति विवरणं दत्तवान् भूस्वामी ।

भूस्वामिनः तर्कः उचितः एव आसीत् । अल्पे एव काले गम्भीरः उत्तमख्यातिं प्राप्तवान् । कालान्तरे सः आप्तसचिवस्थानम् आरूढवान् अपि ।





# मूकः तेमियः

काशीराज्ये ब्रह्मदत्तस्य शासनकालः। तदा भद्रदेशस्य राजकुमारी चन्द्रादेवी पट्टमहिषी आसीत्। बहोः कालात् अनन्तरम् अपि राजदम्पत्योः सन्तानभाग्यं न आसीत्।

राज्यस्य उत्तराधिकारिणः अभावात् प्रजाः अपि बहु दुःखिताः। केचन प्रजाप्रमुखाः महाराजं निवेदितवन्तः यत् पुत्रप्राप्त्यर्थं यज्ञव्रतादिकं किमपि आचरणीयम् इति।

प्रजानाम् आग्रहानुसारं चन्द्रादेवी अनेकव्रतानाम् आचरणं कृतवती। एकस्यां पूर्णिमायां सा निर्जलम् उपवासं कृत्वा मनसि सङ्कल्पं कृतवती- ''यदि अहं शीलवती स्यां, तर्हि मम पुत्रः उत्पद्यताम्'' इति।

देवराजः इन्द्रः चन्द्रादेव्याः कामनां पूरयितुं निश्चितवान्। 'एतस्याः गर्भे जन्म प्राप्तुं कः अर्हति' इति सः बहु चिन्तितवान्। अन्ते सः बोधिसत्त्वं स्मृतवान्।

बोधिसत्त्वः पूर्वजन्मनि काशीराजरूपेण जन्म प्राप्य विंशतिवर्षाणि राज्यं शासितवान् आसीत्। एतस्मिन् अवधौ यत् पापम् आचरितम् आसीत् तस्य प्रायश्चित्तरूपेण अशीतिसहस्रवर्षाणि घोरनरके वासं कृतवान् आसीत्। पापक्षयानन्तरम् इदानीं सः देवलोकं प्राप्य ततः ऊर्ध्वलोकं गन्तुम् उद्युक्तः आसीत्।

एतस्मिन् सन्दर्भे एव देवेन्द्रः बोधिसत्त्वस्य समीपं गत्वा उक्तवान्- ''बोधिसत्त्व! भवान् भूलोकं गत्वा मानवजन्म प्राप्नोतु। तेन अपारं पुण्यम् अर्जितं भवति। तेनैव सह भवान् मानवजातेः उद्धारम् अपि कर्तुं शक्नोति। काशीराजः तस्य पत्नी चन्द्रादेवी च पुत्रप्राप्त्यर्थम् अनेकानि व्रतादीनि आचरितवन्तः। तयोः पुत्ररूपेण भवान् जन्म प्राप्तुम् अर्हति'' इति।

इन्द्रस्य अनुरोधेन बोधिसत्त्वः एतत्



अङ्गीकृतवान् ।

यदा बोधिसत्त्वः चन्द्रादेव्याः गर्भं प्रविष्टवान् तदा तस्य अनुचराः पञ्चशतं देवाः काशीराजस्य परिजनानां पत्नीनां गर्भान् प्रविष्टवन्तः। नवमासानन्तरं बोधिसत्त्वः शुभ-लक्षणैः समेतः चन्द्रादेव्याः गर्भतः जन्म प्राप्तवान्। तद्दिने एव पञ्चशतं देवाः अपि जन्म प्राप्तवन्तः।

राजा आदिष्टवान् यत् एते पञ्चशतं बालकाः राजकुमारेण सहैव वर्धन्ताम्, राज-कुमारस्य अनुचराः च भवन्तु इति। राज-कुमारस्य क्षीरपानादिसेवार्थं चतुःषष्टिधात्र्यः नियोजितवान्।

काशीराज्ये राजकुमारस्य जन्मोत्सवः महता वैभवेन आचरितः। उत्सवसमाप्तेः अनन्तरम् महाराजः महाराज्ञीम् उक्तवान्- "देवि, अहम् बहु सन्तुष्टः अस्मि। भवती किमपि वरं पृच्छतु" इति।

"इदानीं किमपि मास्तु। यदा आवश्यकं तदा निवेदयामि" इति उक्तवती राज्ञी।

बालकस्य 'तेमियः' इति नाम निश्चितम्। ज्योतिषिकाः राजकुमारस्य जन्मकुण्डलीं निर्मितवन्तः। तदा राजा ज्योतिषिकान् पृष्टवान्- "बालकस्य दुष्टग्रहपीडा तु नास्ति किल?" इति।

ज्योतिषिकाः प्रसन्नभावेन उक्तवन्तः- "महाराज! भवतः पुत्रस्य जन्मकुण्डल्यां दुष्ट-ग्रहः कोऽपि न प्रविष्टः। एषः दीर्घायुः भविष्यति" इति।

यदा तेमियः एकमासीयः जातः तदा महाराजः तम् अलङ्कृत्य राजसभां नीतवान्, अङ्के संस्थाप्य लालितवान् च। तत्समये एव चत्वारः चोराः न्यायनिर्णयार्थं महाराज-समीपम् आनीताः। राजा तेषाम् अभिप्रायं श्रुत्वा अन्ते एकस्मै एकसहस्रं कशाताडनं दातुम्, अन्यम् आजीवनं कारागारे स्थापयितुं, तृतीयं शूलम् आरोपयितुं, चतुर्थं मरणदण्डनेन दण्डयितुं च आदिष्टवान्।

बोधिसत्त्वः यद्यपि शिशुः तथापि तस्य पूर्वजन्मनः स्मरणम् आसीत्। सः एतत्

दृश्य दृष्ट्वा चिन्तितवान्- "मम पिता राजा अस्ति। अतः एव कालान्तरे सः नरकं गमिष्यति। अहम् अपि पूर्वं विंशतिवर्षाणि यावत् राज्यशासनं कृतवान्। तत्परिणामतः अशीतिसहस्रवर्षाणां घोरनरकवासम् अनुभूतवान्। पुनरपि राजकुले जन्म प्राप्तवान् अस्मि। मम पिता भविष्यं न जानाति। अतः एव चोरान् कठोरं दण्डयन् पापसञ्चयं कुर्वन् अस्ति। अहं कालान्तरे यदि राजा भवेयं तर्हि मम अपि नरकवासः निश्चितः एव" इति।

तद्दिनात् आरभ्य तेमियः 'एतज्जीवनतः कथं मोक्षः प्राप्तव्यः' इति चिन्तयन् आसीत्। अतः तस्य सुन्दरं स्वर्णवर्णं शरीरं म्लानं जातम्।

तत्सन्दर्भे तस्य पूर्वजन्मसम्बन्धिनी माता प्रत्यक्षीभूय उक्तवती- "वत्स! भीतः मा भवतु। एतज्जन्मतः मुक्तिम् इच्छति चेत्, भवान् मूकः इव बधिरः इव मन्दबुद्धिः इव व्यवहारं करोतु" इति।

तेमियः स्वपूर्वजन्मनः मातुः वचनं पालयितुं निश्चयं कृतवान्।

महाराजस्य आदेशानुसारम् अन्ये पञ्चशतं बालाः अपि तेमियेन सह स्थापिताः आसन्। यदा बुभुक्षा भवति तदा ते बालाः रोदनं कुर्वन्ति स्म। तेमियः तु मौनं तिष्ठति। सः



चिन्तयति- "नरककारणस्य एतस्य जीवनस्य अपेक्षया बुभुक्षया मरणम् एव उचितम्" इति।

राजकुमारस्य विचित्रव्यवहारं दृष्ट्वा धात्र्यः महाराज्ञीं "बालकः क्षीरार्थम् अपि रोदनं न करोति" इति निवेदितवत्यः। राज्ञी महाराजम् एतां वार्तां निवेदितवती। राजा ब्राह्मणान् आहूय तेषां मार्गदर्शनं पृष्टवान्।

ब्राह्मणाः उक्तवन्तः- "क्षीरपानार्थं किमर्थं बालकं पीडयन्ति? समये क्षीरं दत्तं चेत् सः पिबति एव" इति।

धात्र्यः तथैव कृतवत्यः। कदाचित् परीक्षार्थं ताः क्षीरं न यच्छन्ति स्म। तथापि बालकः न रोदिति। अन्यच्च इतरे बालकाः इव



हस्तपादादिकं सञ्चाल्य सन्तोषं न प्रकटयति। शब्दं श्रुत्वा अपि अश्रृण्वन् इव प्रतिक्रियां न प्रकटयति। अत्र किं कारणं स्यात् इति बहु विचिन्त्य अपि कोऽपि मूलं कारणं न ज्ञातवान्।

एवम् एव एकं वर्षम् अतीतम्। एकदा धात्र्यः मिष्टभक्ष्याणि पात्रे पूरयित्वा पात्रं बालकानां पुरतः संस्थाप्य उक्तवत्यः- "भवन्तः एतानि खादन्तु" इति। अनन्तरं बालकानां प्रतिक्रियां रहसि स्थित्वा दृष्टवत्यः।

तेमियं विना सर्वे बालकाः अहमहमिकया गत्वा तानि खादितवन्तः। केचन तु अन्यस्य हस्ते विद्यमानम् अपि स्वीकृत्य खादितवन्तः। तेमियः तु कामपि प्रतिक्रियां न प्रदर्शितवान् एव। एतत् दृष्टवत्याः राज्ञ्याः चन्द्रादेव्याः मनः दग्धम् इव। सा त्वरया आगत्य तेमियस्य मुखे मधुरं स्थापयन्ती उक्तवती- "पुत्र ! खादतु एतत्" इति।

तेमियः पञ्चवर्षीयः जातः। पञ्चवर्षीयाः बालाः अग्नितः भीताः भवन्ति। अग्नितः तेमिये भीतिः उत्पादनीया इति चिन्तितवान् महाराजः। अतः बालकानां कृते एकं सुविशालं कुटीरं निर्मापितवान्। सर्वान् बालकान् तत्र प्रेषयित्वा तस्य रक्षणार्थं शतशः सैनिकान् नियोजितवान्। कुटीरं अग्निना ज्वालितवान् च। अग्निं दृष्ट्वा सर्वे बालकाः भीत्या पलायितवन्तः। तेमियः तु- 'नरकप्राप्तेः अपेक्षया अग्नौ मरणम् एव उचितम्" इति चिन्तयन् अग्निसमीपम् एव गतवान्। रक्षकसैनिकाः त्वरया आगत्य तेमियं रक्षितवन्तः।

तेमियः सप्तवर्षीयः जातः। महाराजः अहितुण्डिकद्वारा कांश्चन सर्पान् आनायितवान्। सर्पाणां दन्तान् निष्कास्य सीवनेन मुखं पिधाय बालकानां मध्ये तान् त्यक्तवान्।

सर्वे बालकाः धावितवन्तः। तेमियः तु स्वस्थानतः विचलितः अपि न जातः। सर्पाः तस्य शरीरम् आरूढवन्तः। शिरः आरुह्य फणां प्रसार्य नृत्यं कृतवन्तः। तथापि तेमियः स्थितप्रज्ञः इव !

राजकुमारस्य पादयोः न न्यूनता। कर्णयोः

मुखे वा न कोऽपि दोषः। तथापि सः एकं पदम् अपि न गच्छति। एकं शब्दम् अपि न उच्चारयति। न कस्यापि वचनं शृणोति। अतः सर्वे चिन्ताक्रान्ताः।

बालकानां मनोरञ्जनार्थं नाटकानि आयोजितानि। तानि दृष्ट्वा सर्वे बालकाः सन्तुष्टाः। तेमियः तु मौनम् उपविष्टः एव आसीत्। कश्चित् नटः हस्तेनखड्गं गृहीत्वा "कुत्र सः राजकुमारः? तं मारयामि अहम्" इति आक्रोशनं कुर्वन् राजकुमारस्य मारणार्थम् उद्युक्तः इव अभिनयं कृतवान्। इतरे बालाः चीत्कारं कुर्वन्तः धावितवन्तः। तेमियः तु यथापूर्वम् अविचलः एव। नटः अभिनयं यक्त्वा ततः गतवान्।

राजकुमारं क्रियाशीलं कर्तुं बहवः प्रयत्नाः कृताः। तं परितः अकस्मात् उच्चैः शङ्खोद्घोषं कृतवन्तः। भेरीः वादितवन्तः च।

बहूनि दिनानि यावत् तस्य मुखं न क्षालितवन्तः। स्नानं न कारितवन्तः। देहतः दौर्गन्धः निस्सरति स्म। सर्वे बालकं तर्जयन्ति स्म- "राजकुमार! किमर्थं स्नानं न करोति? स्वच्छताविषये भवतः आग्रहः एव नास्ति वा?" इति।

एकदा राजकुमारस्य शय्यायाः अधः अग्निं स्थापितवन्तः। अग्नेः स्फुलिङ्गाः तेमियस्य शरीरे पतिताः। तेन शरीरं तत्र तत्र दग्धम्।




तथापि 'नरके घोराग्नौ यत् तप्यते तदपेक्षया एतत् एव वरम्' इति चिन्तयन् सः राजकुमारः विचलितः न जातः एव। किन्तु तदीयमातापितरौ एतत् दृष्ट्वा उद्विग्नौ जातौ। तयोः हृदयं दग्धम्।

अन्ते सर्वाः कठिनपरीक्षाः स्थगयित्वा मातापितरौ तेमियं प्रार्थितवन्तौ- "पुत्र! भवतः अङ्गाङ्गेषु कोऽपि दोषः नास्ति इति वयं जानीमः एव। व्रतजपादीनाम् आचरणपूर्वकं महता कष्टेन भवन्तं पुत्रत्वेन प्राप्तवन्तः। किन्तु भवान् आहारेण सन्तृप्तः महासर्पः इव निश्चलः तिष्ठति। एषः तु अस्माकं दुःखस्य विषयः। कृपया भवान् सामान्यपुरुषः इव व्यवहरतु" इति। किन्तु एतेन अपि किमपि

प्रयोजनं न सिद्धम् ।

तेमियः इदानीं षोडशवर्षीयः तरुणः । कश्चित् पङ्गुः बधिरः मूकः यः कोऽपि वा भवतु नाम, किन्तु यदा तारुण्यं प्राप्यते तदा हृदये कामनाः जागरिताः भवन्ति एव । अतः राजकुमारं विषयासक्तं कर्तुं महाराजेन नर्तक्यः नियुक्ताः ।

मातापितृणाम् आशा- ''स्त्रीनिमित्तकेन आकर्षणेन किमपि परिवर्तनं दृश्येत' इति । राजा एतत् अपि घोषितवान् यत् या नर्तकी राजकुमारम् आक्रष्टुं समर्था भवति सा एव युवराज्ञी भविष्यति इति ।

एकदा तेमियः सुगन्धजलेन स्नापितः । कौशेयवस्त्राणि धारितानि । अनन्तरं तं सुकोमले तल्पे उपवेशितवन्तः ।

तस्मिन् प्रकोष्ठे धूपादीनां विशेषगन्धवर्तिकानां च व्यवस्था कृता आसीत् । काश्चन सुन्दर्यः युवत्यः तत्र आगत्य नृत्यम् आरब्धवत्यः । ताः स्वनृत्यकलया सङ्गीतेन वाक्चातुर्येण च राजकुमारम् आक्रष्टुं बहुधा प्रयत्नं कृतवत्यः । 'एतादृशवातावरणेन मम उपरि कोऽपि दुष्परिणामः न भवेत्, इति चिन्तयन् राजकुमारः श्वासं प्रयत्नेन निरुध्य उपविष्टवान् । तेन अचिरात् एव सः मूर्छां गतवान् ।

ताः युवत्यः भीताः । साक्षात् महाराजस्य समीपं गत्वा ताः उक्तवत्यः- ''महाराज ! राजकुमारः न मनुष्यः, अपि तु पाषाणहृदयः कश्चन राक्षसः स्यात् । तस्य आकर्षणे अस्माभिः कृताः सर्वे प्रयत्नाः विफलाः जाताः । नृत्यं कुर्वत्यः वयं यदा समीपं गतवत्यः तदा सः मूर्च्छितः अभवत्'' इति ।

एवं राजा राज्ञी सर्वे नागरिकाः च राजकुमारं सांसारिकजीवने प्रवर्तयितुं बहुधा प्रयत्नं कृतवन्तः । किन्तु केनापि तेमियस्य रहस्यं न ज्ञातम् । तेमियः तु स्थितप्रज्ञः इव निर्लिप्तः आसीत् ।

(आगामिसञ्चिकायां समाप्ता भविष्यति)






अस्माकं देवालयाः

# अमरनाथः

कदाचित् पार्वती परमेश्वरं पृष्टवती- "आर्य! भवान् कपालहारं धरति किल? किमर्थम्?" इति। तदा शिवः मन्दहासं प्रकटयन् उक्तवान्- "एषः भवत्याः पूर्वजन्मसम्बन्धी कपालः" इति "भवतः मरणे अजाते अहं कथं वा मृता अभवम्?" इति पार्वती कुतूहलेन पृष्टवती।

पार्वत्यै जननमरणरहस्यं निवेदयितुम् इष्टवान् शिवः। किन्तु तदर्थं कृमिकीटाः अपि यत्र न वसन्ति तादृशं स्थलम् अपेक्षितम् आसीत्। एतादृशस्य स्थलस्य अन्वेषणार्थं रुद्रगणीयाः चतसृषु दिक्षु सञ्चारं कर्तुं प्रस्थितवन्तः।





अन्ते ते हिमालयस्य काञ्चित् गुहां प्राप्तवन्तः। तत्परिसरे कोऽपि जीवी तैः न दृष्टः। रुद्रगणीयानां सूचनानुसारं शिवः पार्वती च तां गुहां प्रविष्टवन्तौ। तत्र शिवः पार्वत्यै जननमरणयोः रहस्यं बोधयितुम् आरब्धवान्।




शिवस्य वचनानि शृण्वती पार्वती उपविष्टा एव निद्रां प्राप्तवती । तथापि शिवस्य वचनानां मध्ये मध्ये कश्चित् 'हूँ' इति वदति स्म । एतत् ज्ञात्वा शिवः आश्चर्यचकितः । झटिति सः पार्वतीम् उत्थापितवान् । तत्रस्थस्य जीविनः अन्वेषणे प्रवृत्तः च ।

तत्सन्दर्भे शिवः पार्वती च यत्र उपविष्टौ तस्याः शिलायाः अधोभागतः कश्चन शुकः बहिः आगतः । इतः पूर्वम् अण्डरूपेण स्थितः सः इदमिदानीं शावकरूपतां प्राप्तः आसीत् । सः शुकः शिवेन पार्वत्यै उपदिष्टं रहस्यं सर्वं श्रुत्वा ततः उड्डीय गतवान् ।





तत्रैव समीपे व्यासमहर्षेः कुटीरम् आसीत् । कुटीरस्य पुरतः व्यासस्य पत्नी केशप्रसाधने निरता आसीत् । शुकः तत्र गत्वा तस्यां लीनः अभवत् । सः एव शुकः अनन्तरकाले तस्याः गर्भतः जन्म प्राप्य शुकः इति नाम्ना प्रसिद्धः अभवत् ।

शिवः यस्यां गुहायां पार्वत्यै जनन-
मरणरहस्यं बोधितवान् सा गुहा जनैः
पवित्रतमत्वेन परिगणिता। बहूनि
वर्षाणि अतीतानि। एकदा अजापालः
युवकः कश्चित् गणच्युतं अजाम्
अन्विष्यन् गुहासमीपम् आगतवान्।






जनसम्पर्करहिते अरण्ये शिव-
लिङ्गं दृष्ट्वा सः आश्चर्यचकितः।
शिवलिङ्गदर्शनेन तस्य मनसि भक्ति-
भावः शान्तिः च उत्पन्ना। सः
काश्मीरराजाय एतं विषयं निवेदित-
वान्।

काश्मीरराजः सपरिवारं तत्स्थलं
प्रति आगतवान्। तत्रत्याः मुनयः तस्य
स्थलस्य माहात्म्यं महाराजाय निवेदित-
वन्तः। "एतत्स्थलम् एवम् एव
तिष्ठतु" इति उक्तवन्तः च।





प्रतिवर्षम् अगस्टमासे गुहातः ४६ कि. मी. दूरे स्थिते पहाल्गन् प्रदेशे जनाः एकत्रिताः भवन्ति । ततः काश्मीरस्य धर्मार्थसङ्घस्य अधिपतेः नायकत्वे भक्ताः गुहाम् उद्दिश्य प्रयाणं कुर्वन्ति ।

अत्रत्या प्रकृतिः अतीव रमणीया । पर्वतशिखराणि जलप्रपाताः नद्यः उपनद्यः - एतेषु एकैकम् अपि प्रकृति-सौन्दर्यस्य भाण्डागारम् । एतानि पश्यन्तः जनाः पञ्चषाणां दिनानां प्रयाणेन गुहां प्राप्नुवन्ति ।






प्रकृतिसिद्धं हिमखण्डैः निर्मितं बृहत् शिवलिङ्गं तत्र दृश्यते । प्रप्रथमं भृगुमहर्षिः एतं शिवलिङ्गं दृष्टवान् इति श्रूयते । तद्दिनात् आरभ्य सहस्रशः जनाः एतावत्पर्यन्तम् अपि पवित्रम् एतम् अमरनाथक्षेत्रं पश्यन्तः सन्ति ।



# श्रेष्ठः भक्षकः

जगदीशः गङ्गापुरस्य निवासी। सः स्वभावेन परमालसः। तथापि सः मुग्धजनानां मध्ये उपविश्य स्वपराक्रमविषये यथेष्टं जल्पति।

तस्मिन् ग्रामे मनोहरः नाम मुग्धः युवकः आसीत्। एकदा सः वार्तालापमध्ये जगदीशं पृष्टवान्- "मित्र! सर्वदा मिथ्याजल्पनं करोति किल? का योग्यता भवतः? केवलं वृक्षस्य अधः उपविश्य मक्षिकाः मारयति। किम् अन्यत् कर्तुं शक्यते भवता?" इति।

"मनोहर! अहं अलसः। भवन् तु कर्मशीलः किल? तर्हि वदतु, एकवारं भवान् कति फलानि खादितुं शक्नोति?" इति।

मनोहरः उक्तवान्- "पञ्चदश।"

"अहं तु चत्वारिंशत् फलानि खादामि, जानाति वा?" इति गर्वेण पृष्टवान् जगदीशः।

मनोहरः मुग्धभावेन पृष्टवान्- "निश्चयेन खादति वा? तर्हि प्रदर्शयतु" इति।

"भवान् फलानां व्यवस्थां करोतु। मम खादनसामर्थ्यं प्रदर्शयामि" इति उक्तवान् जगदीशः।

मुग्धः मनोहरः स्नेहितानां साहाय्येन फलानि सङ्गृहीतवान्। जगदीशः यथा अलसः तथैव भक्षकः अपि। अतः सः अल्पप्रयासेन फलानि खादितवान्। तदा मनोहरः आश्चर्यं प्रकटयन् पृष्टवान्- "जगदीश! भवतः तु एतादृशी खादनशक्तिः अस्ति। सम्पादनं तु किमपि नास्ति। एवं स्थिते बुभुक्षां निवारयितुं भवान् किं करोति? जीवनार्थं परिश्रमः किमर्थं न करणीयः?" इति।

"परिश्रमम् अकुर्वन् एव एतावत् खादामि। यदि परिश्रमं करोमि तर्हि बुभुक्षा द्विगुणिता भविष्यति। तेन पुनः कष्टम् अधिकम्। अतः अहं परिश्रमं न करोमि। अहं मम जीर्णशक्तिं वर्धयित्वा खादनस्पर्धासु सर्वासु



विजित्य ग्रामस्य कीर्तिं सर्वत्र प्रसारयितुम् इच्छामि। अतः मम आहारव्यवस्थां भवन्तः पश्यन्ति चेत् ग्रामस्य एव कीर्तिः'' इति उक्तवान् जगदीशः।

जगदीशः एतं प्रस्तावं तदर्थं कृतवान् आसीत् यत् पार्श्वग्रामस्य भूस्वामी प्रतिवर्षं भक्षकस्पर्धाम् आयोजयति स्म। यः स्पर्धायां जयं प्राप्नोति तम् आवर्षं पोषयति स्म च। 'अस्मिन् वर्षे एतस्यां स्पर्धायां जयं प्राप्य श्रेष्ठभक्षककीर्तिं प्राप्नोमि' इति चिन्तयन् आसीत् जगदीशः।

जगदीशस्य वचनं श्रुत्वा मनोहरः ग्रामप्रमुखस्य समीपं गत्वा समग्रं निवेद्य उक्तवान्- ''अस्माभिः किमर्थं वा जगदीशस्य आहारव्यवस्था न करणीया? सः अस्माकं ग्रामस्य नाम प्रसिद्धीकुर्यात् किल?'' इति।

ग्रामप्रमुखः विवेचनशीलः। जगदीशस्य कार्ययोजनायाः मूलं ज्ञातवान् सः। जगदीशः केनचित् उपायेन सम्यक् बोधनीयः इति चिन्तितवान्।

पार्श्वग्रामस्य भूस्वामिनः गृहे सुपुष्टः नाम कश्चित् आसीत्। सः गतवर्षस्य श्रेष्ठभक्षकः। तं ग्रामप्रमुखः चरणसिंहः सम्यक् जानाति।

चरणसिंहः सुपुष्टं स्वगृहम् आनायितवान्। तस्मै जगदीशस्य योजनां निवेदितवान्। अनन्तरं जगदीशम् आहूय उक्तवान् च- ''भवान् श्रेष्ठभक्षकविषयिण्यां स्पर्धायां भागं ग्रहीतुम् इच्छति इति अहं श्रुतवान्। यदि भवतः सामर्थ्यं वास्तविकं तर्हि वयं भवतः साहाय्यम् अवश्यं करिष्यामः। तदर्थं भवतः सामर्थ्यस्य परीक्षा करणीया। एषः सुपुष्टः। वर्षद्वयतः पूर्वं भक्षकस्पर्धायां विजयीभूय भूस्वामिनः पोषणे आसीत्। एतं यदि भवान् भक्षकस्पर्धायां पराजयते तर्हि भवतः सामर्थ्यं प्रमाणितं भवति। तदा वयं ग्रामीणाः भवन्तं पोषयिष्यामः'' इति।

जगदीशः तत्क्षणे एतत् अङ्गीकृतवान्। स्पर्धार्थं सिद्धः अभवत् च। तदा सुपुष्टः उक्तवान्- ''मित्र! भवान् तु कृशकायः। स्पर्धायां भवान् अर्हः इत्यत्र मम सन्देहः''

इति।

तदा जगदीशः कोपेन पृष्टवान्- "अहम् एकवारम् एव चत्वारिंशत् फलानि खादितवान् अस्मि। जानाति वा ?" इति।

"एवं वा? चत्वारिंशत् फलानि यत् खादितवान् तत् न महत् साधनम्। किमर्थम् इदानीम् आवयोः मध्ये वृथा चर्चा? श्वः आवयोः मध्ये माषनिर्मितानाम् अपूपानां खादने स्पर्धा प्रचलतु। भवान् यावत् खादति ततोऽपि दश अपूपान् अहम् अधिकं खादामि" इति सुपुष्टः हसन् उक्तवान्।



अनन्तरदिने स्पर्धा प्रवृत्ता। जगदीशः प्रथमं खादितुम् उपविष्टवान्। द्विशतम् अपूपान् खादितवान् च। एतत् दृष्ट्वा ग्रामीणाः आश्चर्यचकिताः। अनन्तरं सुपुष्टः खादनार्थम् उपविष्टवान्।

सुपुष्टाय जगदीशः अपूपान् दत्तवान्। ते च अपूपाः विशालाकारकाः। तथापि सुपुष्टः तान् विनायासं खादति। एतेन भीतः जगदीशः दोषपूर्णां गणनाम् आरब्धवान्। तथापि सुपुष्टः सन्तोषेण खादन् आसीत्। अन्ते आत्मनः पराजयं निश्चित्य जगदीशः गणनां समापितवान्।

तदनन्तरं सः गाम्भीर्येण उक्तवान्- "सुपुष्टः इतोऽपि दश अपूपान् खादति चेत् भवतः विजयम् अङ्गीकरोमि" इति।

सुपुष्टः एतत् अङ्गीकृतवान्। जगदीशः विंशति-अपूपान् परिविश्य दश इति गणितवान्। तदपि खादित्वा सुपुष्टः पृष्टवान्- "अहं स्पर्धायां जयं प्राप्तवान् इति इदानीं वा अङ्गीकरोति किल ?" इति।

"सर्वे पश्यन्तः सन्ति। मम अङ्गीकारेण अनङ्गीकारेण वा किम् ?" इति पृष्टवान् जगदीशः।

"तथा न। स्पर्धालुः भवान् किल? भवान् अङ्गीकरोति चेत् स्पर्धा समाप्ता भवति। तदा अहं गृहं गत्वा सावधानतया पुनः शतम् अपूपान् खादितुं शक्नोमि" इति उक्तवान् सुपुष्टः।

जगदीशः सुपुष्टस्य खादनशक्तिविषये

आश्चर्यं प्रकटयन् पृष्टवान्- "भवान् एतावत् कथं खादति ? एतस्य रहस्यं किम् ?" इति।

"मम तावती बुभुक्षा अस्ति। अतः खादामि। एतावदेव स्यात् अस्य रहस्यम्। अहम् अधिकं किमपि न जानामि, यतः यः अधिकं खादति तस्य बुद्धिः कार्यं न करोति" इति सुपुष्टः उक्तवान्।

"एतस्य अर्थः यत् भवान् मम मार्गदर्शने असमर्थः इति किल ?" इति जगदीशः पृष्टवान्।

"मम मार्गदर्शनम् एकम् एव- भवान् भवतः बुभुक्षां निवारयितुं मार्गम् अन्विष्यतु। अन्यथा कः वा एतावत् आहारं प्रतिदिनं दद्यात् ?" इति पृष्टवान् सुपुष्टः।

"एवं तर्हि बुभुक्षा कथं न्यूनीकरणीया ?" इति कुतूहलेन पृष्टवान् जगदीशः।

"अलसस्य बुभुक्षा अधिका। तस्य सदा खादने एव दृष्टिः। यदि परिश्रमं करोति तदा बुभुक्षा वशे भवति। अतः अहम् अधिकं परिश्रमं करोमि। मम अनुभवः यत् यदा अहं श्रमं परित्यक्तवान् तदा बुभुक्षा अपि अधिका।"

"भवान् प्रतिदिनं परिश्रमं करोति इत्येतत् सत्यं वा ?" इति सन्देहं प्रकटितवान् जगदीशः।

"अथ किम् ? बुभुक्षानिवारणे मम सः एव उपायः। यदा भक्षणस्पर्धार्थम् आह्वानम् आगच्छति तदा एकसप्ताहं यावत् कार्यं त्यजामि। एतेन मम खादनशक्तिः दशगुणिता भवति" इति सुपुष्टः स्वशक्तेः रहस्यं निवेदितवान्।

जगदीशः ज्ञातवान् यत् अलसस्य न सुखं, न गौरवम्। बुभुक्षा सर्वान् अपि विशेषतया पीडयति। श्रमेण एव बुभुक्षायाः तीव्रता न्यूनीभविष्यति इति।

क्रमशः जगदीशः स्वकीयम् आलस्यं परित्यक्तवान्। स्वशक्तिं कार्येषु विनियुक्तवान् च।





# धीवरः किर्मीरः

बदरिकानामके ग्रामे किर्मीरः नाम कश्चित् धीवरः आसीत्। सः प्रतिदिनं स्वकीयेन उडुपेन नदीमार्गेण समुद्रं गच्छति, मीनान् सङ्गृह्य ततः प्रत्यागच्छति। मीनानां विक्रयणेन प्राप्तेन धनेन जीवनं यापयति च।

एवं स्थिते कदाचित् किर्मीरस्य उडुपः भग्नः। अनिवार्यतया तेन अन्यः उडुपः निर्मातव्यः एव अभवत्। अतः सः उत्तमं वृक्षखण्डम् अन्विष्यन् सायङ्कालसमये पर्वतसमीपं गतवान्। बहुकालपर्यन्तम् अटनेन अपि सः उडुपयोग्यम् उत्तमं वृक्षखण्डं न प्राप्तवान्। अत्रान्तरे आकाशः मेघैः व्याप्तः अभवत्। सर्वत्र गाढान्धकारः प्रसृतः च। 'इतःपरम् अपरिचिते अस्मिन् स्थले स्थितिः अपायकरी एव' इति चिन्तयित्वा किर्मीरः ततः प्रस्थितः।

अन्धकारकारणतः किर्मीरः मार्गभ्रष्टः। सुदीर्घसञ्चारानन्तरम् अपि पर्वतशिखराणि एव दृश्यन्ते, न तु समुद्रः। एतन्मध्ये वृष्टिः अपि आरब्धा। "अस्यां वृष्टौ बुभुक्षितेन मया प्रातःकालपर्यन्तम् अत्र एव स्थातव्यं भवेत्" इति चिन्तयन् आसीत् किर्मीरः। अत्रान्तरे सुदूरे तेन दीपप्रकाशस्य रेखा दृष्टा। आशा उज्जीविता। सः पुनरुज्जीवनं प्राप्तवान् इव।

दीपस्य दिशम् अनुसरन् कथञ्चित् किर्मीरः अग्रे गतवान्। कञ्चित् कुटीरं प्राप्तवान् च। द्वारशब्देन सः अन्तःस्थान् आहूतवान्। किञ्चित्कालानन्तरं कश्चन वृद्धः आगत्य द्वारम् उद्घाटितवान्। किर्मीरं प्रश्नार्थकदृष्ट्या दृष्टवान् च।

"श्रीमन्! अस्मिन् अरण्यप्रान्ते अहं मार्गभ्रष्टः जातः। बुभुक्षया श्रान्तः अपि। अतः भोजनार्थं किञ्चित् दत्त्वा शयनार्थं अवकाशं कल्पयति चेत् उपकृतः भवेयम्"

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



इति दैन्येन प्रार्थितवान् किर्मीरः ।

''अन्तः आगच्छतु, इतः त्रिचतुर्योजनाभ्यन्तरे कस्याऽपि गृहं नास्ति'' इति वदन् किर्मीरम् अन्तः आहूतवान् सः वृद्धः ।

अन्तः वृद्धस्य पत्नी पाककार्ये निरता आसीत्। सा किर्मीरस्य आगमनं न ज्ञातवती इव तूष्णीम् आसीत्। वृद्धः अपि तया सह किमपि सम्भाषणं न कृतवान्। भोजनम् अपि मौनं समाप्तम् ।

नूतनस्थले शयनं कृतम् इत्यतः मध्यरात्रे अतीते अपि किर्मीरः निद्रां न प्राप्तवान् । ''अस्मिन् निर्जनप्रदेशे एतौ वृद्धौ किमर्थं निवसतः ? अत्र किमपि रहस्यं स्यात् एव । तत् किमिति ज्ञातव्यम् एव'' इति चिन्तितवान् सः ।

रात्रेः तृतीये यामे वृद्धः जागरूकतया उत्थाय विना शब्दं कोणे स्थितायाः पेटिकायाः समीपं गतवान् । पेटिकातः नीलवर्णं उष्णीषम् एकं निष्कासितवान् । तत् शिरसि स्थापयित्वा ''काश्मीरं, काश्मीरम्'' इति उक्तवान् सः । अहो आश्चर्यम् ! इन्द्रजालेन इव वृद्धः अदृश्यतां गतः । अनन्तरं वृद्धा अपि एवम् एव अदृश्यतां गता ।

किर्मीरः शयानः एव एतत्सर्वं पश्यन् आसीत् । क्षणकालं सः दिग्भ्रान्तः । अनन्तरं कुटीरे वृद्धयोः अनुपस्थितिं दृढीकृत्य सः स्वयं पेटिकायाः समीपं गतवान् । धैर्येण पेटिकाम् उद्घाटितवान् । तत्र इतोऽपि द्वित्राणि नीलवर्णीयानि उष्णीषाणि आसन् । किर्मीरः तेषु एकं निष्कास्य शिरसि संस्थाप्य ''काश्मीरं काश्मीरम्'' इति उच्चारितवान् ।

तत्क्षणे वायुना बलात्कारेण सः कुत्रापि नीतः । क्षणद्वयानन्तरं वायुशब्दः न श्रुतः । किर्मीरः सावधानतया नेत्रद्वयम् उद्घाटितवान् । इदानीं सः कस्यचित् राजभवनस्य भोजनशालायाम् अस्ति । वृद्धः वृद्धा च पाकशालायां स्थितानि भक्ष्यादीनि वस्त्रेण बन्धयन्तौ आस्ताम् । सुवर्णमयानि चषककलशादीनि च तौ स्वस्यूते स्थापितवन्तौ । किर्मीरं दृष्ट्वा तौ क्षणकालं स्तब्धौ । अनन्तरं त्वरया बद्धानि



वस्तूनि उन्नीय उष्णीषं शिरसि स्थापयित्वा "बदरिकापर्वतं प्रति, बदरिकापर्वतं प्रति" इति वदन्तौ अदृश्यतां गतवन्तौ।

'तयोः गमनेन पीडा परिहृता' इति चिन्तयन् किर्मीरः निश्चिन्ततया तत्रत्यानि खाद्यवस्तूनि उदरपूर्णं खादितवान्। पार्श्वे एव महाराजस्य पानार्थं स्थापितं द्राक्षारसपात्रं सः दृष्टवान्। सन्तोषेण द्राक्षारसं पीत्वा आत्मविस्मृत्या तत्रैव शयनं कृतवान् अपि।

प्रातःकाले महाराजस्य सेवकाः पाकशालायां सुप्तं किर्मीरं दृष्टवन्तः। तस्य हस्तपादौ शृङ्खलया बद्ध्वा महाराजसमीपं नीतवन्तः। "महाप्रभो! प्रतिदिनम् अपि प्रासादं प्रविश्य यः कोऽपि यथा न जानीयात् तथा चौर्यम् एषः चोराग्रेसरः एव कृतवान्" इति उक्तवन्तः ते।

"एतादृशः दुष्टः चोराग्रेसरः न जीवेत्। एतं स्तम्भे बद्ध्वा परितः तृणकाष्ठानि संस्थाप्य सजीवं दहन्तु" इति महाराजः कोपेन आज्ञापितवान्।

सेवकाः किर्मीरं वध्यस्थानं नीतवन्तः। महान्तं स्तम्भं भूमौ दृढं संस्थाप्य तत्र एतं बद्धवन्तः। परितः शुष्कतृणकाष्ठादीनि स्थापितवन्तः।

अत्रान्तरे चोराग्रेसरः बद्धः इति वार्ता समग्रे नगरे प्रसृता आसीत्। चोराग्रेसरस्य दर्शनार्थं जनाः सर्वकार्याणि त्यक्त्वा वध्यस्थानम् आगतवन्तः। यतः राजप्रासदे प्रतिदिनं प्रवर्तमानस्य चौर्यस्य वार्ता समग्रे देशे प्रसृता आसीत्। राजभवनं परितः विशेषव्यवस्था अस्ति चेदपि प्रतिदिनं बहूनां वस्तूनां चौर्यं तु प्रचलति स्म एव। चोरः केन मार्गेण कथम् आगच्छति इति तु महती समस्या। 'चौर्यं चोरः न करोति, प्रायः कश्चन पिशाचः करोति' इति वार्ता अपि नगरे प्रसृता आसीत्। एतादृशपरिस्थितौ किर्मीरस्य बन्धनं जातम्। अतः एव तं द्रष्टुं तावान् जनसम्मर्दः।

सेवकाः अग्निं समीपम् आनीतवन्तः। "इतः परं मम मरणम् एव शरणम्" इति इति निश्चितवान् किर्मीरः।

तदा भाग्यवशात् सः उष्णीषं स्मृतवान्। पार्श्वस्थं न्यायाधिकारिणम् उक्तवान् च- ''श्रीमन् ! मम काचित् अन्तिमा इच्छा अस्ति। मम उष्णीषं पाकशालायाम् अस्ति। तत् उष्णीषं मम प्राणप्रियम्। तत् मम शरीरे स्थापयतु। मया सह मम तत् अपि दग्धं भवतु'' इति।

''एषा तु सामान्या प्रार्थना। मरणदण्डेन दण्डितस्य अन्तिमा इच्छा पूरणीया अपि'' इति चिन्तितवान् न्यायाधीशः। अतः कञ्चित् सेवकं तत् उष्णीषम् आनेतुम् आदिष्टवान् सः। सेवकः यदा उष्णीषम् आनीतवान् तदा तत् किर्मीरस्य शिरसि स्थापितवान्। यावत् सेवकाः अग्निं ज्वालयितुं प्रवृत्ताः ततः पूर्वम् एव किर्मीरः 'बदरिकापर्वतं प्रति, बदरिकापर्वतं प्रति'' इति उच्चारितवान्। तदा किर्मीरः स्तम्भसहितः एव अदृश्यतां गतः। जनाः अत्याश्चर्येण तस्य गमनं दृष्टवन्तः।

किर्मीरः क्षणद्वये एव बदरिकापर्वतप्रान्ते आगत्य पतितः। स्तम्भे यत् बद्धम् आसीत् तत् तथैव आसीत्। 'बन्धविमोचनार्थं कोऽपि लभ्येत वा' इति परितः दृष्टवान् किर्मीरः। तदा कश्चन पुरुषः समीपे गच्छन् दृष्टः।

''अये! पुण्यपुरुष! मां बन्धनात् विमोचयितु। तेन भवान् पुण्यभाक् भविष्यति'' इति उच्चैः आहूय उक्तवान् किर्मीरः।

तदा सः पुरुषः ''किं भोः ? अपूर्वः एषः स्तम्भः अत्र कथम् आगतः ? भवान् कथम् एवं बद्धः ? देवदारुवृक्षः इव दृश्यते किल एषः !'' इति वदन् किर्मीरस्य बन्धनं निवारितवान्।

''सर्वं विचित्रम् एव। उडुपनिर्माणार्थं मम वृक्षखण्डः अपेक्षितः आसीत्। काश्मीरस्य महाराजः मह्यं बहुमानरूपेण एतत् दत्तवान्। प्रीत्यतिशयेन अहम् एव आत्मानम् एवं बन्धितवान्'' इति हसन् उक्त्वा किर्मीरः तत् दारुखण्डं शिरसि संस्थाप्य महता कष्टेन गृहं प्रति नीतवान्।



# वाक्चातुर्यम्

देवराजः कदाचित् कार्यनिमित्तं नगरं गतवान्। कार्याणि समाप्य प्रत्यागच्छन् सः कस्यचित् आपणस्य पुरतः स्थितवान्।

स च राङ्कवानाम् आपणः। आपणस्वामी देवराजम् आदरातिशयेन अन्तः आहूय "भवान् क्रीणातु, मा वा क्रीणातु। दर्शने का हानिः? एषः उत्तमः राङ्कवः। मूल्यम् अपि न अधिकम्। यदि भवान् एतं धरति तर्हि जनाः भवन्तं भूस्वामिनं चिन्तयन्ति। एकवारं धृत्वा किञ्चिद्दूरं गत्वा आगच्छतु तावत्" इति उक्तवान्। देवराजाय राङ्कवं धारितवान् च।

देवराजः दाक्षिण्यम् अनुभवन् तं धृतवान्। मार्गे किञ्चिद्दूरं गत्वा प्रत्यागतवान्। तत्समये देवराजस्य परिचयम् अप्राप्तवान् इव आपणिकः उक्तवान्- "उत्तमं राङ्कवं धृतवान् भवान् निश्चयेन भूस्वामी एव कश्चित् भवेत्। सौभाग्येन अत्र उपस्थितः भवान्। आगच्छतु, आगच्छतु" इति।

आपणिकस्य वाक्चातुर्येण सन्तुष्टः देवराजः धनं दत्त्वा राङ्कवं क्रीतवान्।





# उर्वारुकवाणिज्यम्

अमीरनगरस्य महाराजः अजीजमोहम्मदः। एकदा सः मृगयार्थं प्रस्थितः। मार्गे सः कश्चित् कृषिकं दृष्टवान्। सः कृषिकः गर्दभस्य उपरि महाबन्धं संस्थाप्य, आगच्छति स्म। महाराजः कृषिकं पृष्टवान्- "मित्र! महाबन्धस्य अन्तः किम् अस्ति?" इति।

"श्रीमन्, अत्र उर्वारुकाणि सन्ति। मम क्षेत्रे उत्पन्नानि एतानि फलानि निश्चितसमयतः पूर्वम् एव प्राप्तानि। अतः एतानि महाराजस्य समीपं नयन् अस्मि। महाराजः उदारी इति अहं श्रुतवान्। मम अदृष्टं यदि उत्तमं स्यात् तर्हि योग्येन मूल्येन महाराजः एतानि क्रीणीयात्" इति उक्तवान् कृषिकः। 'सम्भाषमाणः महाराजः एव' इति सः न ज्ञातवान् एव।

"महाराजः कियता मूल्येन एतानि क्रीणीयात् इति भवतः अभिप्रायः?" इति पृष्टवान् महाराजः।

"न्यूनातिन्यूनं सहस्रं दीनारान् दद्यात् एव" कृषिकः उत्तरं दत्तवान्।

"एतावत् दातुं न शक्यते इति सः यदि चिन्तयति?" इति महाराजः मोहम्मदः पुनः पृष्टवान्।

"अहं पञ्चशतं दीनारान् प्रार्थयामि।"

"एतावत् मूल्यम् अपि अधिकम् एव इति यदि सः चिन्तयति तर्हि?"

"त्रिशतं दीनारान् पृच्छामि।"

"एतावत् अपि अधिकम् इति वदति चेत्?"

"एवं तर्हि शतं दीनारान् पृच्छामि।"

"एतत् अपि अधिकम् इति वदति चेत्?"

"पञ्चाशत् दीनारान् पृच्छामि।"

"एतत् अपि अधिकम् इति उक्तं चेत्?"

"त्रिंशत् दीनारान् स्वीकरोमि।"

"एतत् अपि अधिकम् इति यदि वदति तर्हि?"

"अरेबियाकथा"

“एवं यदि सः वदति तर्हि मम गर्दभं सिंहासनस्य दिशि सम्प्रेर्य ततः पलायनं करोमि” इति असमाधानेन उक्तवान् कृषिकः।

कृषिकस्य वचनं श्रुत्वा महाराजः उच्चैः हसितवान्। स्वयम् अग्रे गतवान् च। अनन्तरं सः मृगयाकार्यक्रमं व्याक्षिप्य अन्य-मार्गेण तद्दिने एव राजधानीं प्राप्तवान्। राजधानीप्राप्तेः समनन्तरं एव द्वाररक्षकान् आज्ञापितवान्- “मम दर्शनार्थं गर्दभेन सह कृषिकः आगमिष्यति। तं किमपि न पृच्छन्तु। साक्षात् मम समीपं प्रेषयन्तु” इति।

एकघण्टानन्तरं कृषिकः गर्दभेन सह तत्र आगतवान्। “महाराजं द्रष्टुम् इच्छामि” इति द्वारपालकान् निवेदितवान्। द्वारपालकाः कृषिकम् अन्तः प्रेषितवन्तः।

महाराजः वेषं परिवृत्य प्राङ्गणे उपविश्य कृषिकस्य प्रतीक्षायाम् आसीत्। वेषान्तरे स्थितस्य महाराजस्य परिचयं न प्राप्तवान् कृषिकः। सः उर्वारुकबन्धं गर्दभात् अवतार्य महाराजस्य पुरतः स्थापितवान्।

“भवान् मदर्थं किमपि आनीतवान् इति भाति। किं तत्?” इति महाराजः पृष्टवान्।

“अनुग्रहणीयः अयं जनः। मम क्षेत्रतः प्रथमं प्राप्तानि एतानि उर्वारुकाणि आनीतवान् अस्मि” इति उक्तवान् कृषिकः।

“एतेषाम् उर्वारुकाणां किं मूल्यम् इच्छति भवान्?” इति महाराजः पृष्टवान्।



"एकसहस्रं दीनारान्" इति कृषिकः उक्तवान्।

"एतत् तु मूल्यम् अधिकम्" महाराजः उक्तवान्।

"तर्हि पञ्चशतदीनारैः माम् अनुगृह्णातु प्रभो!"

"एतत् अपि अधिकम् एव।"

"तर्हि त्रिशतदीनारान् ददातु।"

"एतत् अपि अधिकम्।"

"शतदीनारान् वा ददातु कृपया।"

"तावत् अपि दातुं न शक्यते।"

"पञ्चाशत् दीनारान्?"

"तदपि अधिकम् एव।"

"त्रिंशत् दीनारान् ददाति वा?"

"तावत् अपि दातुं न शक्यते"

"महाप्रभो! मार्गे अहं कस्यचित् महापापिनः मुखं दृष्टवान्। तस्य फलम् एतत्। त्रिंशत्दीनारान् विना अहम् एतेषाम् उर्वारुकाणां विक्रयणं न करोमि एव" इति स्पष्टम् उक्तवान् कृषिकः।

महाराजः उत्तरं किमपि न दत्तवान्, अपि तु उच्चैः हसितवान्। तदा कृषिकः महाराजस्य मुखं सम्यक् परिशीलितवान्। तेन सः ज्ञातवान् यत् 'मार्गे मिलितः एषः एव' इति।

"महाप्रभो! त्रिंशत् दिनारान् कृपया दापयतु। अन्यथा भवान् जानाति एव यत् मम गर्दभः प्राङ्गणात् बहिः एव बद्धः अस्ति इति" इति कृषिकः उक्तवान्।

महाराजस्य हासस्य सीमा एव नास्ति। उदरोपपीडं हसन् सः कोषाध्यक्षम् आहूतवान्। आदिष्टवान् च- "एतस्मै सहस्रं दीनारान् ददातु। तदनन्तरं पञ्चशतं, ततः त्रिशतम्, एकशतं, पञ्चाशत्, त्रिंशत् च दीनारान् पुनः ददातु" इति।

केषाञ्चित् उर्वारुकाणां मूल्यं नवदशशताधिकदीनाराः! महाराजस्य औदार्येण कृषिकः स्तब्धः। अनन्तरं सः महाराजेन दत्तान् दीनारान् गर्दभस्य उपरि आरोप्य स्वगृहं प्रतिगतवान्।






पार्वत्याः वचनं श्रुत्वा लक्ष्मीगणपतिः महाविष्णोः समीपं गत्वा आत्मानं प्रति जातम् अन्याय्यं निवेदितवान्, तथा "कुमारस्वामिना सह स्पर्धार्थम् अहं भूप्रदक्षिणं कर्तुं शक्नोमि वा? इतः पूर्वम् एव कुमारस्वामी मयूरम् आरुह्य प्रस्थितवान् खलु? इदानीं मया किं करणीयम्?" इति पृष्टवान्।

विष्णुः तं दृष्ट्वा "वत्स! एतत्कृते चिन्ता मास्तु। भवान् पञ्चलक्षवारं शिवपञ्चाक्षरीमन्त्रं जपतु। अनन्तरं पार्वतीपरमेश्वरौ परितः त्रिवारं प्रदक्षिणं करोति चेत् समस्तभूप्रदक्षिणस्य फलं तीर्थयात्राफलं च सिध्यति" इति उक्तवान्।

विष्णोः वचनानुसारं शुचिर्भूतः लक्ष्मीगणपतिः एकस्मिन् प्रशस्तप्रदेशे उपविश्य शिवपञ्चाक्षरीमन्त्रस्य जपं कर्तुम् आरब्धवान्।

तस्मिन् समये कुमारस्वामी मयूरम् आरुह्य आकाशमार्गेण गच्छन् प्रथमतीर्थक्षेत्रं यदा प्राप्तवान्, तदा दूरे लक्ष्मीगणपतिं दृष्टवान्। सः लक्ष्मीगणपतिः ततः पूर्वम् एव तीर्थस्नानं समाप्य तीर्थान्तरं गच्छन् आसीत्।

संशयग्रस्तः कुमारस्वामी समीपं गत्वा परिशीलितवान्। तत्र सिकतायां मूषकस्य पादचिह्नानि अपि अङ्कितानि आसन्।

कुमारस्वामी तस्मिन् क्षेत्रे उपस्थितान् "किं भोः, यः कोऽपि लम्बोदरः, वामनः, मूषकारूढः एकः अत्र आगत्य स्नानं कृत्वा गतवान् वा?" इति पृष्टवान्।



"आम्, सत्यम्। इदमिदानीं गतवान्। महान् पुण्यात्मा सः। एकैकां सुवर्णमुद्राम् अपि दानरूपेण दत्तवान्। यद्यपि वामनः, तथापि महान् तेजस्वी उदारी च" इति ते श्लाघितवन्तः।

"अहो! वामनः कीदृशं महत्कार्यं कृतवान्! अत्र स्नानेन कालयापनं मास्तु। अग्रिमक्षेत्रे स्नानं करिष्यामि" इति आलोचयन् कुमारस्वामी अग्रिमक्षेत्रं प्रति प्रस्थितवान्। किन्तु तत्रापि पूर्ववत् एव लक्ष्मीगणपतिः क्षेत्रस्नानं समाप्य ततः निर्गच्छन् आसीत्।

सर्वेषु क्षेत्रेषु कुमारस्वामिनः एषः एव अनुभवः जातः। एतेन कारणेन सः कुत्रापि तीर्थस्नानादिकम् अकृत्वा केवलं भूप्रदक्षिणं समाप्य कैलासं प्रत्यागतवान्। ततः पूर्वम् एव लक्ष्मीगणपतिः पञ्चलक्षवारं शिवपञ्चाक्षरीमन्त्रस्य जपं कृत्वा पार्वतीपरमेश्वरौ परितः त्रिवारं प्रदक्षिणं कृत्वा विनीतभावेन स्थितः आसीत्।

सभायां उपस्थिताः सर्वे "एषः लक्ष्मीगणपतिः भूप्रदक्षिणादिकं किमपि अकृत्वा केनापि सुलभेन उपायेन गणाधिपत्यं सम्पादयितुं प्रयतमानः अस्ति" इति परस्परम् वदन्तः आसन्।

तदा कुमारस्वामी प्रत्यागत्य पार्वतीपरमेश्वरौ उद्दिश्य "अहं गणाधिपत्यं प्राप्तुम् अनर्हः इति सम्यक् ज्ञातवान्। लक्ष्मीगणपतिः एव गणाधिपत्यं प्राप्नोतु" इति उक्तवान्। कुमारस्वामिनः वचनं श्रुत्वा शिवसभायाम् उपस्थिताः सर्वे पार्वतीपरमेश्वरौ च आश्चर्यचकिताः।

"कुमार! किमर्थम् एवं वदसि?" इति पृष्टवती पार्वती।

"अहं प्रपञ्चे स्थितानि सर्वाणि क्षेत्राणि अपि गतवान्। किन्तु कस्मिन् अपि तीर्थे स्नानं न कृतवान्। प्रत्येकस्मिन् क्षेत्रे अपि मम गमनतः पूर्वम् एव एषः लक्ष्मीगणपतिः स्नानं समाप्य गच्छन् मया दृष्टः। तीर्थक्षेत्रेषु स्थिताः जनाः अपि एतं विचारं प्रमाणीकृतवन्तः। मदपेक्षया एषः सर्वप्रकारेण अपि उत्तमतरः। अतः रुद्रगणानां नायकत्वं प्राप्तुम् एषः एव अर्हः, न तु अहम्" इति उक्तवान्




नवरत्नखचिते सिंहासने उपवेश्य समस्त-गणानाम् आधिपत्यं, तस्य अनुजाः ये इतरे गणपतयः आसन् तेषाम् उपरि अधिकारं च तस्मै प्रदत्तवन्तः। पर्वतीपरमेश्वरौ अभि-षेककार्यं कृतवन्तौ।

अभिषेकानन्तरं लक्ष्मीगणपतिं उद्दिश्य "भवान् भवतः अनुजाः च लोकत्रयं पालयन्तः ये भवतां स्मरणं कुर्वन्ति ये च पूजयन्ति तेषां सर्वेषां समस्तकार्याणि यथा सफलानि भविष्यन्ति तया साहाय्यं कृत्वा तान् रक्षन्तु" इति पार्वतीपरमेश्वरौ उक्तवन्तौ।

एवं हि सति अन्यत्र तारकासुरस्य मरणा-नन्तरं तस्य पत्नी तारकाक्षः कमलाक्षः विद्युन्माली इति नामाङ्कितैः स्वपुत्रैः सह रसातलं गत्वा तत्र शुक्राचार्यस्य समीपे पुत्राणां विद्याभ्यासव्यवस्थां कृत्वा तान् पोषयन्ती तत्रैव स्थितवती।

यदा पुत्राः प्रौढाः अभवन् तदा ते स्वजन-कस्य मरणविचारं सविस्तरं ज्ञातवन्तः। अनन्तरं ते त्रयः अपि मेरुपर्वतस्य उपरि गत्वा ब्रह्माणं ध्यायन्तः दीर्घकालं तपः आचरितवन्तः।

तारकासुरस्य पुत्राणां तपसा प्रीतः ब्रह्मा प्रत्यक्षं भूत्वा "भवन्तः यद्यत् इच्छति तत् पृच्छन्तु" इति उक्तवान्।

"भगवन्! रथत्वरहिते रथे उपविश्य चापत्वरहिते चापे बाणत्वरहिते बाणं सन्धाय

कुमारस्वामी।

तस्य वचनं श्रुत्वा सभायाम् उपस्थिताः सर्वे अपि शिवपञ्चाक्षरीमन्त्रस्य महत्त्वं ज्ञात्वा लक्ष्मीगणपतिः एव रुद्रगणानाम् अधिपतिः भवतु इति स्वीयम् अङ्गीकारं प्रकटितवन्तः। अनन्तरं लक्ष्मीगणपतिं गणाधिपतिस्थाने वैभवेन प्रतिष्ठापयितुम् आवश्यककार्याणि आरब्धवन्तः।

रुद्रगणीयाः गत्वा पुण्यनदीनां सप्त-समुद्राणां च जलानि आनीतवन्तः। प्रमथाः भूतगणाः गरुडाः गन्धर्वाः किन्नराः किंपुरुषाः नागाः भूलोकवासिनः च आहूताः। बृहस्पतिः दिव्यं मुहूर्तं निश्चितवान्। तस्मिन् मुहूर्ते पत्न्या जयलक्ष्म्या सहितं लक्ष्मीगणपतिं

कृतेन प्रहारेण एव अस्माकं मरणं भवतु। अन्येन केनापि कारणेन अस्माकं मरणं यथा न भवेत् तथा अस्मान् अनुगृह्णातु! किञ्च समस्तविद्याः, तपसां शक्तीः, ऐश्वर्यभोगभाग्यादिकं शिवभक्तिं च वयम् इच्छामः। सुवर्णेन रजतेन लोहेन च निर्मितानि नगराणि अपि अपेक्षितानि'' इति ते उक्तवन्तः।

ब्रह्मा वरप्रदानेन तान् अनुगृह्य तेषां वासार्थम् अपेक्षितानां नगराणां निर्माणार्थं विश्वकर्माणम् आज्ञाप्य अदृश्यः अभवत्।

विश्वकर्मा सुवर्णेन रजतेन लोहेन च नगरत्रयं निर्माय तारकासुरेभ्यः अर्पितवान्। तानि नगराणि एव त्रिपुराणि इति प्रसिद्धानि अभवन्। तेषां नगराणां गमनशक्तिः आसीत्। तेषु नगरेषु धनधान्यसमृद्धिः अपि आसीत्। सुवर्णपुरे तारकाक्षः रजतनगरे कमलाक्षः लोहनगरे विद्युन्माली च स्वभवनानि निर्माय तेषु वसन्तः त्रिषु लोकेषु स्वेच्छया अटन्ति स्म।

एतेषां त्रिपुराणां पीडा प्रतिदिनं वर्धते स्म। तानि जेतुं वशीकर्तुं वा इन्द्रादिदेवाः सर्वथा असमर्थाः आसन्। अतः ते ब्रह्मणः समीपं गत्वा ''महाप्रभोः, त्रिपुरासुरनामकाः तारकासुरकुमाराः अस्मान् पुनः पुनः पीडयन्तः सन्ति। तेषां नगराणि उड्डीय आगत्य अस्माकं भवनानाम् उपरि आक्रमणं कृत्वा सर्वं नामावशेषं कुर्वन्ति। एवमेव तूष्णीं



तिष्ठामः चेत् समस्तलोकानाम् अपि नाशस्य भीतिः अस्ति। अस्मान् रक्षतु'' इति प्रार्थनाम् अकुर्वन्।

''सत्यम्। अहम् अपि जानामि। एतेषां त्रिपुरासुराणां मारणं न सुलभसाध्यम्। वयं शिवस्य समीपं गत्वा तेन सह समालोचयामः। आगच्छन्तु'' इति उक्त्वा ब्रह्मा देवैः सह शिवस्य समीपम् आगतवान्।

शिवः तेषाम् आगमनकारणं श्रुत्वा ''तान् त्रिपुरासुरान् हन्तुम् अहं न शक्नोमि। मम तेजसः अर्धभागं दास्यामि। भवन्तः एव तेषां मारणं साधयन्तु'' इति उक्तवान्।

तदा ब्रह्मा त्रिपुरासुरैः प्राप्तानां वराणां विषयं सविस्तरम् उक्त्वा ''भोः देवाः, भवन्तः

अस्माकम् अपि तेजांसि गृहीत्वा, त्रिपुरासुरान् स्वयं मारयन्तु" इति उक्तवान्।

अनन्तरं "भूमिः रथरूपेण, वेदाः रथाश्वानां रूपेण, सूर्यचन्द्रौ रथस्य चक्रयोः रूपेण, सौदामिनी चापरूपेण, आदिशेषः मौर्वीरूपेण, विष्णुमूर्तिः नारायणास्त्ररूपेण च च शिवेन परिवर्तनीयाः। एतैः साधनैः शिवेन त्रिपुरासुराणां संहारः करणीयः" इति निश्चयः कृतः। तेनैव प्रकारेण साक्षात् शिवः एव त्रीपुराणि प्रहृतवान्। तस्य प्रहार-समनन्तरम् एव त्रीणि अपि नगराणि भस्मीभूय भूमौ पतितानि। तेषु स्थिताः सर्वे राक्षसाः अपि भस्मीभूताः।

त्रिपुरासुराणां नाशानन्तरं पुनः जलन्धर-नामकः अपरः राक्षसः लोकान् पीडयितुम् आरब्धवान्। जलन्धरस्य वास्तवनामधेयं सूकरः इति। सः हिरण्यकशिपोः दशमपुत्रस्य अग्निजिह्वस्य पुत्रः। सः अपि ब्रह्माणम् उद्दिश्य अतिघोरं तपः तप्त्वा देवगणैः वा राक्षसगणैः वा, नागमानवादिभिः वा मरणं यथा न स्यात् तथा वरं सम्पादितवान्। जलमध्ये वासस्य शक्तिम् अपि प्राप्तवान्। अनन्तरं सः अष्ट दिशः अपि जितवान्। इन्द्रादिदेवान् स्वर्गात् निष्कासितवान्। एवंरीत्या स्वर्गम् आक्रम्य सः जलन्धरः त्रयाणां लोकानाम् अपि प्रभुः जातः।

जलन्धरतः पराजयं प्राप्य कैलासात् शिवः, वैकुण्ठात् विष्णुः च धावित्वा मानससरोवरे गुप्तरूपेण स्थितवन्तौ। तत्र तौ परस्परं समालोच्य परब्रह्मणः ध्यानसहितं तपः आचरितवन्तौ। तदा परब्रह्मा प्रत्यक्षीभूय, शिवाय त्रिशूलं विष्णवे सुदर्शनचक्रं च च दत्तवान्। "भवन्तौ परस्परम् आयुधानां विनिमयं कुर्वन्तौ जलन्धरस्य मरणं साधयताम्" इति उक्तवान् च।

शिवः विष्णुः च सन्तोषेण स्वीयानाम् आयुधानां विनिमयं कृत्वा, जलन्धरस्य प्रतीक्षणे स्थितवन्तौ।





# येष्टलव‍ः पिशाचाः

कस्मिंश्चित् ग्रामे अवतारः नाम कश्चित् युवकः आसीत्। सः स्वीयं विद्याभ्यासं समाप्य उद्योगस्य अन्वेषणार्थं कदाचित् नगरं गतवान्। सायङ्कालपर्यन्तं नगरे अटित्वा यदा सः गृहं प्रत्यागतवान् तदा तस्य माता तं दृष्ट्वा "किं भोः भवतः मातुलस्य पुत्री आदिलक्ष्मीः अस्ति किल। तस्याः विवाहः श्वः प्रातः खलु? किं विस्मृतवान् वा? मम अस्वास्थ्यं तु जानाति एव। तत्र गन्तुम् अहं सर्वथा न शक्नोमि। अतः भवता एव अवश्यं गन्तव्यम्" इति उक्तवती।

"अम्ब! अहं विस्मृतवान् आसम्। सकाले स्मारितवती। बाल्यात् आरभ्य तया सह क्रीडितवान्। एवं स्थिते विलम्बेन गमनं न उचितम्। अतः अहम् इदानीम् एव मातुल-गृहं गच्छामि" इति उक्तवान् अवतारः।

"अस्मिन् अन्धकारे इदानीम् एव गच्छति वा? मास्तु भोः। श्वः प्रातः गच्छतु। तावती त्वरा किमर्थम्?" इति पृष्टवती माता।

"पश्यतु, अम्ब! कीदृशी मनोहरा ज्योत्स्ना प्रसृता अस्ति! अस्माकं ग्रामकुल्यायाः उपरि यः सेतुः अस्ति तेन मार्गेण गच्छामि चेत् मातुलगृहं प्राप्तुं घण्टाद्वयं पर्याप्तम्। किमपि भयं नास्ति" इति उक्त्वा अवतारः शीघ्रं शीघ्रं किञ्चित् भोजनं कृत्वा उत्तमवस्त्राणि धृत्वा प्रस्थितवान्।

सः कुल्यां प्राप्य सेतुम् आरुह्य शीघ्रं शीघ्रं गच्छन् अन्यस्मिन् पार्श्वे अवतीर्णवान्। तदनन्तरं तालवृक्षाणां एका वाटिका। वाटिकायाः मध्ये गमनार्थं काचित् एकपदी अस्ति। तदनन्तरम् अस्ति मातुलस्य ग्रामः।

अवतारः तालवृक्षाणां वाटिकायाः मध्ये गच्छन् आसीत्। तदा अकस्मात् पार्श्वस्थ-वृक्षतः त्रयः पिशाचाः अवप्लुत्य तस्य पुरतः



वयम् अपि तत्र आगच्छामः" इति उक्तवन्तः ।

तेषां वचनानि श्रुत्वा अवतारः किञ्चित् धैर्यम् अवलम्ब्य "एतं वृत्तान्तं मम मातुलः जानाति चेत् मम मारणहोमं कुर्यात् । विवाहार्थं यः कोऽपि पिशाचान् नयति वा ?" इति पृष्टवान् ।

"भवान् अस्मान् न नेष्यति चेत् इदानीम् एव वयं भवतः मारणहोमं कुर्मः । किं वदति ?" इति पृष्टवन्तः पिशाचाः ।

एतेभ्यः पिशाचेभ्यः विमोचनं नास्ति इति ज्ञात्वा अवतारः "अस्तु तावत् । भवतां द्वारा मारणहोमापेक्षया मम मातुलद्वारा एव मारण-होमः भवतु । ततः पूर्वं आदिलक्ष्म्याः विवाहः निर्विघ्नं समाप्तः भवतु । यदि मया सह भवन्तः अदृश्यरूपेण आगच्छन्ति तर्हि समीचीनं भवति । नो चेत् भवतां दर्शनेन अनावश्यकः कोलाहलः भवेत्" इति उक्तवान् ।

"तस्मिन् विषये चिन्ता मास्तु । भवान् गच्छतु" इति उक्तवन्तः पिशाचाः ।

अवतारः अग्रे प्रस्थितवान् । पुनः पिशाचाः न दृष्टाः । किन्तु ते मायारूपेण अनुसरन्तः सन्ति इति सः ज्ञातवान् ।

अवतारः मातुलगृहस्य समीपम् आगतवान् । ततः पूर्वम् एव तत्र उपस्थिताः पिशाचाः बहुमूल्यवस्त्राभरणादिभिः अलङ्कृताः आगत्य मार्गं निरुध्य स्थितवन्तः ।

अवतारस्य सर्वाणि अङ्गानि कम्पितानि । तदा पिशाचेषु अन्यतमः "भोः मानव ! भवतः आकारं पश्यामः चेत् धैर्यवान् इव प्रतीयते । एवं हि सति किमर्थं कम्पते भवान् ? भयं किमर्थम् ? एतस्यां रात्रौ कुत्र प्रस्थित-वान् ?" इति पृष्टवान् ।

अवतारः पूर्वापेक्षया अधिकं कम्पमानः "मम मातुलपुत्र्याः आदिलक्ष्म्याः विवाहार्थं गच्छन् अस्मि" इति उक्तवान् ।

तस्य वचनं श्रुत्वा पिशाचाः 'साधु ! साधु !' इति उच्चैः कोलाहलं कुर्वन्तः, नृत्यन्तः च "आदिलक्ष्म्याः वा भवतु, अनन्त-लक्ष्म्याः वा भवतु । किं तेन अस्माकं भवेत् ?

अवतारस्य पुरतः एव विवाहगृहं प्रविष्टवन्तः। अवतारः एतत्सर्वं दृष्टवान्। तत्र कस्य अपि कोऽपि संशयः न उत्पन्नः।

किन्तु अवतारः महता भयेन पुनः कम्पमानः विवाहवितानम् अतीत्य यदा गृहस्य द्वारसमीपं गतवान् तदा तस्य मातुलः तत्र आगत्य तं दृष्ट्वा "किं भोः? किं जातं भवतः? किमर्थम् एवं कम्पते? कुशलं खलु? आगमनेन श्रान्तः वा? पार्श्वस्थं प्रकोष्टं गत्वा किञ्चित् विश्रान्तिं स्वीकरोतु" इति वदन् शीघ्रं शीघ्रं अन्यत्र गतवान्।

अवतारः प्रकोष्टं प्रविष्टवान्। तत्र एकं कटं तदुपरि एकम् उपधानं च स्थापयित्वा शयितवान्। अन्यत्र पिशाचाः स्त्रीयचेष्टाः आरब्धवन्तः।

वधूपक्षीयजनैः वरपक्षीयजनानां वासार्थम् एकं पृथक् गृहं सज्जीकृतम् आसीत्। पिशाचेषु एकः वरस्य माता इव स्त्रीयरूपं परिवर्त्य वधूप्रकोष्ठं प्रविष्टवान्।

तत्र आगच्छन्तीं वरजननीं दृष्ट्वा आदिलक्ष्म्याः माता उत्थाय आदरपूर्वकम् "आगच्छतु भगिनि, आगच्छतु" इति स्वागतं कृतवती।

"भवद्भिः दीयमानं भक्ष्यभोज्यादिकं कीदृशम् अस्ति इति द्रष्टुम् आगतवती" इति उक्तवान् पिशाचः।

तत्रैव एकस्मिन् कोणे कण्डोलेषु लड्डुकाः शष्कुल्यः मोदकानि इत्यादयः स्थापिताः आसन्। तान् सर्वान् आदिलक्ष्म्याः माता





प्रदर्शितवती ।

पिशाचः एकम् अपूपं हस्तेन गृहीत्वा तं भक्षयन् "एतस्य अपूपस्य वर्णः भवत्याः पुत्र्याः वर्णसदृशः एव अस्ति । एतादृशं पुरातनं गुडं कुत्र लब्धवती भोः ?" इति पृष्टवान् । तस्य वचनं श्रुत्वा आदिलक्ष्मीः तस्याः माता च खेदम् अनुभूतवत्यौ ।

अनन्तरं पिशाचः लड्डुकादिसर्वेभ्यः भक्ष्येभ्यः किञ्चित् किञ्चित् गृहीत्वा खादन् तिरस्करवचनानि वदन् "अस्तु तावत्, इदानीं भाण्डद्वये शर्करान्नं दध्यन्नं च प्रेषयतु" इति उक्तवान् ।

तदा आदिलक्ष्म्याः माता "इदानीं का त्वरा ? शीतलं भवति चेत् खादितुं समीचीनं न भवति किल ? सकाले सर्वं वयं प्रेषयामः" इति उक्तवती ।

"अस्माकं गृहं या बाला आगमिष्यति तया पुरातनं पर्युषितं सर्वं खादितुम् अभ्यासः करणीयः । एताः लड्डुकाः दश-द्वादशदिनेषु समीचीनं दुर्गन्धं प्राप्नुवन्ति । तावत्पर्यन्तं भवत्याः पुत्री शर्करान्नं दध्यन्नं च खादति । एतत् भवत्याः पुत्र्याः भक्षणार्थम् एव पृच्छन्ती अस्मि" इति उक्तवान् पिशाचः ।

तत्रैव आदिलक्ष्मीः गौरीदेव्याः पूजार्थं सिद्धता कुर्वती आसीत् । पिशाचस्य वचनानि श्रुत्वा तस्याः वमनशङ्का उत्पन्ना । सा धावन्ती गृहस्य पृष्ठभागं गत्वा वमनं कृतवती ।

तस्याः माता भयग्रस्ता भूत्वा सम्भ्रमेण पुत्र्या सह धावितवती । तदा झटिति पिशाचः रूपपरिवर्तनं कृत्वा प्रकोष्ठतः बहिः गतवान् ।

आदिलक्ष्मीः शीतजलेन मुखं क्षालयन्ती "अहं सर्वथा एतं विवाहं न इच्छामि" इति रोदनं कुर्वती मातरम् उक्तवती ।

तस्याः वचनं श्रुत्वा पूर्वापेक्षया अधिकतरं भ्रान्ता तस्याः माता पतिम् अन्विष्यन्ती धावितवती ।

अन्यत्र द्वितीयः पिशाचः वरस्य प्रकोष्ठं प्रति गतवान् । वरः गृहस्य अट्टे मशकानां बाधया पीडितः शयितवान् आसीत् ।

पिशाचः वधूः इव रूपं परिवर्त्य हस्ते

एकं व्यजनं गृहीत्वा वरस्य समीपं गतवान्।

तां दृष्ट्वा वरः आश्चर्यचकितः भूत्वा "किमर्थं आगतवती ? किं जातं भवत्याः ? यः कोऽपि पश्यति चेत् न हसेत् वा ?" इति पृष्टवान्।

"हसतु नाम। अहम् अपि हसितुं जानामि। अत्र भवतः मशकैः महती पीडा भवति इति चिन्तया आगतवती। अस्माकं ग्रामस्य मशकान् दृष्ट्वा व्याघ्राः अपि भीत्या दूरं धावन्ति" इति वदन् पिशाचः व्यजनस्य त्सरुणा वरस्य हस्तं तीक्ष्णं ताडितवान्।

वरः 'हा ! हा !' इति हाहाकारं कृत्वा तूष्णीं स्थितवान्। किन्तु पुनः पिशाचः "अत्र एकः मशकः अस्ति। तत्र अन्यः, अत्र अपरः, इति वदन् वरस्य सर्वाणि अङ्गानि ताडयितुम् आरब्धवान्।

तदा क्रुद्धः वरः "इदानीम् एतावता अलम्। तूष्णीं तिष्ठतु" इति वदन् पिशाचस्य हस्तस्थितं व्यजनम् आकृष्य गृहीतवान्।

पिशाचः अश्रूणि स्रावयन् "मशकानां निवारणार्थं प्रवृत्तम् अल्पं ताडनम् अपि सोढुम् असमर्थः भवान् क्रुद्धः भवति किल ? विवाहानन्तरं मम ताडनं कथं सह्यते भवता" इति पृष्टवान्।

"किम् उक्तम् ? विवाहानन्तरं मां ताडयिष्यति वा ?" इति आश्चर्येण वरः पृष्टवान्।



"भवतः पाकः मह्यं न रोचते चेत्, अहं तूष्णीं स्थास्यामि वा ?" इति पृष्टवान् पिशाचः।

"मया पाकः अपि करणीयः वा ?" इति वरः क्रोधेन पृष्टवान्।

"अथ किम् ? केवलम् उच्छिष्टपात्राणि शुद्धीकृत्य तूष्णीम् उपविशति वा ? तथा कर्तुं न शक्यते भोः ! गृहस्य मार्जनं, वस्त्राणां क्षालनं, पाककार्यम् इत्यादीनि सर्वाणि कार्याणि करणीयानि। इदानीम् एव वदामि" इति उक्तवान् पिशाचः।

तदा वरः उत्थाय "भवत्याः कर्मकरः अपेक्षितः, न पतिः !" इति उक्त्वा शीघ्रं शीघ्रं अट्टतः अवतीर्य, जननीजनकयोः समीपं

गत्वा, सर्वं वृत्तान्तं श्रावयित्वा "अहं सर्वथा तां वधूम्, न इच्छामि" इति उक्तवान्।

अपरक्षणे एव एकत्र वधूः, अन्यत्र वरः च एतं विवाहं न अङ्गीकुरुतः इति वार्ता सर्वत्र व्याप्ता अभवत्। महान् कोलाहलः च सञ्जातः।

तदा तत्र उपस्थिताः उभयपक्षीयाः बन्धुजनाः "किमिदं भोः? किं पाञ्चालिकाक्रीडा इति चिन्तितं वा? इदानीं किं जातम्? स्पष्टं वदन्तु" इति उभयपक्षीयान् आहूय आग्रहं कृतवन्तः। तदा वधूपक्षीयाः वरपक्षं वरपक्षीयाः वधूपक्षं च निन्दितवन्तः। सर्वत्र महान् कोलाहलः श्रूयते स्म। एतस्य अनर्थस्य कारणीभूतौ पिशाचौ, तयोः प्रेरकः तृतीयः पिशाचः च एकत्र सम्भूय स्वीयनाटकं समीचीनतया अभिनीतम् इति सन्तोषेण हसन्तः नृत्यन्तः च आसन्। अन्यत्र विवाहगृहस्य कोलाहलेन व्यथितः आदिलक्ष्म्याः पिता अकस्मात् अवतारं स्मृतमान्।

सः अवतारम् अन्विष्यन् तस्य प्रकोष्ठं प्रविश्य स्वेदप्रवाहेण क्लिन्नं तस्य शरीरं दृष्ट्वा अन्यान् आकारितवान्। "कः तत्र भोः? यः कोऽपि गत्वा वैद्यम् आञ्जनेयम् आनयतु शीघ्रम्" इति उक्तवान् च। तत्र आगताः केचन "सः अत्रैव विवाहमण्डपे अस्ति। आनयामः" इति वदन्तः बहिः गतवन्तः।

तस्मिन् ग्रामे आञ्जनेयः एव प्रसिद्धः वैद्यः। आञ्जनेयस्य नामश्रवणसमनन्तरम् एव वस्त्राभरणादिभिः अलङ्कृताः पिशाचाः विकारस्वरेण आक्रोशं कुर्वन्तः कृष्णवर्णीयाः मार्जालाः भूत्वा अन्धकारे कुत्रचित् धावितवन्तः। एतत् सर्वं दृष्ट्वा केचन आश्चर्येण स्तम्भिताः। अन्ये केचन उच्चैः हसितवन्तः।

अनन्तरम् अवतारद्वारा सर्वं वृत्तान्तं सर्वे ज्ञातवन्तः। सर्वेषाम् अनर्थानां कारणीभूताः ते पिशाचाः एव इत्येतत् स्पष्टम् अभवत्। अनन्तरम् आदिलक्ष्म्याः विवाहः निर्विघ्नं सम्पन्नः।



# आफ्रिकादेशीयाः हरिणाः

आफ्रिकादेशीयाः हरिणाः इतरहरिणापेक्षया उन्नताः स्थूलाः च। आफ्रिकादेशे स्पर्धार्थम् अश्वान् इव एतान् हरिणान् गृहेषु इतरैः पोष्यप्राणिभिः सह पालयन्ति।

उन्नतः आकारः, वक्राकारं तीक्ष्णं शृङ्गम्, शरीरे विशिष्य कण्ठदेशे केशाः, सास्ना, वृषभस्य इव पुच्छम्- एतैः सहिताः एते हरिणाः तृणपर्णानि खादन्तः जीवन्ति। वयोनुगुणं एतेषां शरीरवर्णे अपि परिवर्तनं दृश्यते। सामन्यतः एतेषां वर्णः नीलमिश्रितः धूसरः।

आफ्रिकामरुभूमौ पर्वतप्रदेशेषु च एते दृश्यन्ते चेदपि विशेषतः सङ्ख्याधिक्यं तु हरिततृणैः व्याप्ते समतलप्रदेशे एव।

आदिनम् एते अरण्येषु तिष्ठन्ति। रात्रौ उषःकालतः पूर्वं च समतलप्रदेशम् आगत्य जलं पीत्वा प्रतिगच्छन्ति। समूहरूपेण निवसताम् एतेषां गणे शतपर्यन्तम् अपि सङ्ख्या दृश्यते। कदाचित् पुञ्जातीयाः हरिणाः एकाकिनः सन्तः लघुगणरूपेण सञ्चरन्ति।

शरीरभारकारणतः इतरप्राणिनाम् अपेक्षया एतेषु आलस्यम् अधिकं दृश्यते। तथापि समये प्राप्ते आकाशे गच्छन्तः इव वायुवेगेन गच्छन्ति। आफ्रिकादेशस्य घनारण्येषु समूहरूपेण जात्यश्वाः इव धावन्तः तरुगुल्मादीन् अतिक्रामन्तः नदीतटाकान् उत्तरन्तः यत् सञ्चरन्ति तत् नयनमनोहरं वर्णनातीतं च।

सामान्यतः एते हरिणाः भीरवः। तथापि विपत्काले स्वसन्तानरक्षणसन्दर्भे च शृङ्गम् एव आयुधत्वेन उपयुज्य शत्रून् समर्थतया सम्मुखीकुर्वन्ति। हरिणानां प्रसूतिः वर्षद्वये एकवारम्।

अतः सङ्ख्यावृद्धिः मन्दगत्या भवति। स च कश्चन कालः आसीत्- यत्र आफ्रिकादेशस्य दक्षिण-पूर्वभागे एलञ्जातीयाः हरिणाः यथेष्टं दृश्यन्ते स्म। किन्तु इदानीम् तज्जातीयानां सङ्ख्या दिने दिने क्षीयमाणा अस्ति।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

अङ्कः - Lap

अपूपः - A sweatmeat

अयस्किट्टः - Rust

अस्थिदण्डः - Rod-like bone

अहितुण्डिकः - Snake Charmer

उडुपः - Catamaran

उदरोपपीडम् - Laugh to one's hearts cousent

उपधानम् - Pillow

उर्वारुकम् - Cucumber

उष्णीषम् - Headgear

गन्धवर्तिका - Sandal stick

गर्दभः - Donkey

चेष्टालुः - Mischiefmonger

जटा - Matted hair

तन्त्री - Wire

त्सरुः - Handle of a sword

धात्री - Foster mother

धीवरः - Fisherman

निरुध्य - Having obstructed

निवेशनम् - Site

पर्युषितम् - Stale

पुत्तलिका - Doll

पोष्यप्राणी - Domestic animal

बधिरः - Deafman

बिभ्यति - Afraid of

भक्षकः - Glutton

भषणम् - Barking of a dog

महिषः - Buffalo

माषः - Blackgram Dhall

राङ्कवः - Blanket

लक्ष्यम् - Aim

वातानुकूलः - Air conditioned

वितानः - Pandal

विपर्यस्ता - Overturned

व्यजनम् - Fan

व्यामः - The measure of the two extended arms

व्यूहः - Array

शावकः - Cub

शुनकः - Dog

शृङ्खला - Chain

शृङ्गम् - Horn

शष्कुली - An eatable item

सास्ना - The dewlap of an ox

सीवनम् - Stitching

स्फुलिङ्गः - Spark

हरिणः - Deer

## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां फेब्रवरी-८६ मासे प्रकटयिष्यामः।





❀ उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/– रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम् बेङ्गलूरु–५६०००४

---

### 'अक्टोबर' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– सिद्धोऽयं समरयुगे राष्ट्ररक्षणाय?

द्वितीयचित्रम्– सिद्धोऽयम् अणुयुगे शान्तिस्थापनाय?

**प्रेषिका–** एम्. के. अनुरूपा, ९३७/१, (अेट), कान्तराजे अरस् मार्गः, लक्ष्मीपुरम्, मैसूरु-४

# भवन्तः जानन्ति वा? (उत्तराणि)

१. कृष्णानदी। २. यमुनायाः। ३. तप्ती। ४. कोसीनदी। ५. चम्बल् नद्याः तीरे

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# अकस्मात् मेलनम् ।

| | |
|---|---|
| सन्दीपः- हरि ओं, योगीशः खलु भवान् ? | Hari Om, Hallo, aren't you Yogish ? |
| योगीशः- संन्दीप ! भवान् अत्र ! किम् एतत् आश्चर्यम् ! | Sandeep! It's you! So unexpected ! |
| स- अहं वर्षत्रयतः अत्र एव अस्मि । भवान् अत्र किं करोति ? कदा अत्र आगतवान् ? | I have been here for three years now. When did you come here ? What are you doing ? |
| यो- अहं जुलैमासे अत्र आगतवान् । तन्त्रशास्त्रं पठामि । | I came here in July. I am doing engineering. |
| सं- सन्तोषस्य वार्ता । गृहे मातापितरौ सहोदराः च कुशलिनः किल ? | Very good ! Your parents and brothers are all fine ? |
| यो- सर्वे कुशलिनः । नवरात्रसन्दर्भे अहं गृहं गतवान् आसम् । तदा भवद्विषये माता बहु पृष्टवती । | All are fine. I had been home during Navarathri. Mother enquried about you in fact. |
| सं- तर्हि सर्वे माम् इदानीम् अपि स्मरन्ति । | So all of you remember me even now ! |
| यो- कथं वा विस्मरणं भवेत् भोः ? अस्मद्गृहे वर्षत्रयं निवसन् भवान् अस्मद्गृहीयः एव सञ्जातः आसीत् । | How can we forget ? You lived with us for three years. You were a member our own family ! |
| सं- आं, स च अविस्मरणीयः कालः । ते हि नो दिवसाः गताः . . . । तदस्तु, भवान् कुत्र निवसति ? | Yes, that is indeed unforgettable. Those good days are gone...! well, where do you stay ? |
| यो- मल्लेश्वरे । चम्पकचित्रमन्दिरस्य समीपे । | In Malleshwaram, near Champaka theatre. |
| सं- अहम् अपि मल्लेश्वरे एव निवसामि । एषः मम सङ्केतः । अद्य वा श्वः वा मम गृहम् अवश्यम् आगच्छतु । मम यानम् आगतम् । पुनः मिलामः । | I am staying in Malleshwaram too. Here is my address. Come to my house either today or tomorrow, The Bus has arrived. We'll meet again. |

CHANDAMAMA [Sanskrit] DECEMBER 1985 Regd. No. TN/MS(S)/302

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




# चन्दमामायां

**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् एतां १,२०,००,००० बालकाः पठन्ति ।

**चन्दमामायाः** प्रसारसङ्ख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्व-एशियादेशानां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम् अस्ति ।

**भारतस्य सर्वाधिकप्रसारयुता बालानां मासिकी ।**